

# ब्रह्म सूत्रम्

## (पद पदार्थ व्याख्या सहितं)




### भागवत प्रेस

नया राजेन्द्रनगर, उरई [उ० प्र०]

फोन- ५१८२७ पि० २८५००१

ॐ

साधना सदन- शङ्कराचार्य चौक, कनखल हरद्वार

# ब्रह्म -- सूत्रम्

(छोटा साइज)

प्रथम संस्करण १९९९ संख्या- १०००

सम्पूर्ण अधिकार व्यय-

आश्रमाधीन सुरक्षित मूल्य- नित्यपाठ

प्रकाशित-

भागवत प्रेस, सूर्य भवन नया राजेन्द्रनगर, उरई (उ० प्र०)

फोन- ५१८२७ पि०- २८५००१



# सत्सत्

त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये ।
शिवशिवा कृपा प्रसादेन इदं कार्यं सम्पूर्णं जातं ।
म. मं श्री श्री १०८ श्री स्वामी गणेशानन्द महाराज द्वारा हरिद्वारे संस्थापितं सधना सदनेन प्रकाशिता 'शब्दार्थ बोधिनी" नामकोऽस्तियोः ग्रन्थः हिन्दी व्याख्या सहितः तस्यैव मूल संस्कृत भाषायाः संगृहीतं 'सूत्र पद- पदार्थाधिकरण सारेण युक्त इदं ब्रह्म सूत्र शास्त्रं नित्य पाठकेभ्यः समर्पितम् ।

निवेदका-

सूर्य प्रबोधः (स्वात्मानन्दः)

## ॥ अधिकरण-सूचि-पत्रम् ॥

| क्र० | विषय | पृ०सं० |
|---|---|---|

| क्र० | विषय | पृ० सं० |
|---|---|---|



**चतुर्थः पादः–**

**चतुर्थोऽध्यायः प्रथमः पादः-**



**द्वितीयः पादः-**

॥ समाप्तोऽयमधिकरण विवेकः ॥

ॐ

# ब्रह्मसूत्र का संक्षिप्त परिचय

शास्त्रं ब्रह्मविचाराख्यम् अध्यायाः स्युश्चतुर्विधाः ।
समन्वयाविरोधौ द्वौ साधनं च फलं तथा ॥ १ ॥

समन्वये स्पष्टलिङ्गम् अस्पष्टत्वे युपास्यगम् ।
ज्ञेयगं पदमात्रं च ज्ञेयं पादेष्वनुक्रमात् ॥ २ ॥

द्वितीये स्मृतितर्काभ्याम् अविरोधोऽन्यदुष्टता ।
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ॥ ३ ॥

तृतीये विरतिस्तत्त्वंपदार्थपरिशोधनम् ।
गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ॥ ४ ॥

चतुर्थे जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा ।
ब्रह्मप्राप्तिब्रह्मलोकाविति पादार्थसंग्रहः ॥ ५ ॥

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं सङ्गतिश्च शास्त्रेऽधिकरणं मतम् ॥ ६ ॥

शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा ।
शास्त्रादिविषये ज्ञाते तत्तत् सङ्गतिरूह्यताम् ॥ ७ ॥

# उपोद्घात अर्थात् शारीरकमीमांसाख्य ब्रह्मसूत्र का अध्यासभाष्य

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो,
वंशऋषिभ्यो महद्भ्यो नमो गुरुभ्यः ।
सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो,
ब्रह्मैवाहमस्मि ब्रह्मैवाहमस्मीति ।।

युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोः तमप्रकाशवद्विरुद्ध-स्वभावयोः इतरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतराम् इतरेतरभावानुपपत्तिः ।

इत्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां च अध्यासः, तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषये अध्यासो मिथ्येति भवितुं युक्तम् ।

तथापि अन्योऽन्यस्मिन् अन्योऽन्यात्मकताम् अन्योन्यधर्मांश्च अध्यस्य इतरेतराविवेकेन अत्यन्तविविक्तयोर्धर्मधर्मिणोः मिथ्याज्ञान-निमित्तः सत्यानृते मिथुनीकृत्य, अहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः ।

आह- कोऽयमध्यासो नामेति ?

उच्यते—स्मृतिरूपः परत्र पूर्वदृष्टावभासः ।

तं केचिदन्यत्रान्यधर्माध्यास इति वदन्ति ।

केचित्तु यत्र यदध्यासस्तद्विवेकाग्रहनिबन्धनो भ्रम इति ।

अन्ये तु यत्र यदध्यासस्तस्यैव विपरीतधर्मत्वकल्पनामाचक्षते इति ।

सर्वथापि त्वन्यस्यान्यधर्मावभासतां न व्यभिचरति ।

तथा च लोकेऽनुभवः शुक्तिका हि रजतवदवभासते, एकश्चन्द्रः सद्वितीयवदिति ।

कथं पुनः प्रत्यगात्मन्यविषयेऽध्यासो विषयतद्धर्माणाम् ?

सर्वो हि पुरोऽवस्थिते विषये विषयान्तरमध्यस्यति, युष्मत्प्रत्ययापेतस्य च प्रत्यगात्मनोऽविषयत्वं ब्रवीषि ।

उच्यते-न तावदयमेकान्तेनाविषयः, अस्मत्प्रत्ययविषयत्वात्, अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः ।

न चायमस्ति नियमः पुरोऽवस्थित एव विषये विषयान्तरमध्यसितव्यमिति ।

अप्रत्यक्षेऽपि ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति ।

एवमविरुद्धः प्रत्यगात्मन्यप्यनात्माध्यासः ।

तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते, तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुः, ।

तत्रैवं सति यत्र यदध्यासस्तत्कृतेन गुणेन दोषेण वाऽणुमात्रेणपि स न सम्बध्यते ।

तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः ।

सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि ।

कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति ?

उच्यते-देहेन्द्रियादिष्वहंममाभिमानरहितस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः ।

न हीन्द्रियाण्यनुपादाय प्रत्यक्षादिव्यवहारः सम्भवति ।

न चाधिष्ठानमन्तरेण इन्द्रियाणां व्यवहारः सम्भवति ।

न चानध्यस्तात्मभावेन देहेन कश्चिद् व्याप्रियते ।

न चैतस्मिन्सर्वस्मिन्नसति असङ्गस्य आत्मनः प्रमातृत्वमुपपद्यते। न च प्रमातृत्वमन्तरेण प्रमाणप्रवृत्तिरस्ति।

तस्मादविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च।

पश्वादिभिश्चाविशेषात्। यथाहि पश्वादयः शब्दादिभिः श्रोत्रादीनां सम्बन्धे सति शब्दादिविज्ञाने प्रतिकूले जाते ततो निवर्तन्ते, अनुकूले च प्रवर्त्तन्ते।

यथा दण्डोद्यतकरं पुरुषमभिमुखमुपलभ्य मां हन्तुमयमिच्छतीति पलायितुमारभन्ते, हरिततृणपूर्णपाणिमुपलभ्य तं प्रत्यभिमुखीभवन्ति।

एव पुरुषा अपि व्युत्पन्नचित्ताः क्रूरदृष्टीनाक्रोशतः खड्गोद्यतकरान् बलवत उपलभ्य ततो निवर्तन्ते, तद्विपरीतान् प्रति प्रवर्तन्ते अतः समानः पश्वादिभिः पुरुषाणां प्रमाणप्रमेयव्यवहारः। पश्वादीनां च प्रसिद्धोऽविवेकपुरःसरः प्रत्यक्षादिव्यवहारः। तत्सामान्यदर्शनात् व्युत्पत्तिमतामपि पुरुषाणां प्रत्यक्षादिव्यवहारः तत्कालः समान इति निश्चीयते।

शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारी नाविदित्वात्मनः परलोकसम्बन्धमधिक्रियते, तथापि न वेदान्तवेद्यमशनायाद्यतीतम-पेतब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्त्वमधिकारेऽपेक्ष्यते अनुपयोगाद् अधिकारविरोधाच्च ।

प्राक् च तथाभूतात्मविज्ञानात् प्रवर्तमानं शास्त्रमविद्याव-द्विषयत्वं नातिवर्तते ।

तथाहि 'ब्राह्मणो यजेत' इत्यादीनि शास्त्राणि आत्मनि वर्णा-श्रमवयोवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्ते ।

अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम ।

तद् यथा-पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति बाह्यधर्मानात्मन्यध्यस्यति ।

तथा देहधर्मान्- स्थूलोऽहं, कृशोऽहं, गौरोऽहं, तिष्ठामि, गच्छामि चेति ।

तथेन्द्रियधर्मान्-मूकः, काणः,क्लीबः, बधिरः, अन्धोऽहम्, इति तथाऽन्तःकरणधर्मान् कामसङ्कल्पविचिकित्साध्यवसायादीन् । एवम-हंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं

सर्वसाक्षिणं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति ।

एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्व-भोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः ।

अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते ।

यथा चायमर्थः सर्वेषां वेदान्तानां तथा वयमस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः ।

इति ब्रह्मसूत्राणामध्यासभाष्यम् ॥





# ब्रह्म- सूत्रम्

## प्रथमाध्याये प्रथमः पादः

### १ जिज्ञासाधिकरणम्, सू० १

### सूत्र- अथातो ब्रह्मजिज्ञासा ॥ १ ॥

पदच्छेदः- अथ, अतः ब्रह्मणः, जिज्ञासा [ मोक्षकामेन कर्त्तव्या ]

पदार्थोक्तिः— अथ = साधनचतुष्टयसम्पत्त्यनन्तरम् अतः = कर्मफलस्य अनित्यत्वात् ज्ञानफलस्य मोक्षस्य च नित्यत्वात् मोक्षकामेन ब्रह्मज्ञानाय वेदान्तवाक्यानां विचारः [ तात्पर्यनिश्चयः ] कर्त्तव्यः ।

अधिकरणसारः

अविचार्यं विचार्यं वा ब्रह्माध्यासानिरूपणात् ।<br>
असन्देहाफलत्वाभ्यां न विचारं तदर्हति ॥<br>
अध्यासोऽहंबुद्धिसिद्धोऽसंगं ब्रह्म श्रुतीरितम् ।<br>
सन्देहान्मुक्तिभावाच्च विचार्यं ब्रह्म वेदतः ॥

### २. जन्माद्यधिकरणम् सू० २

### सूत्र- जन्माद्यस्य यतः ॥ २ ॥

पदच्छेदः— जन्मादि, अस्य, यतः [ तद् ब्रह्म ] ।

पदार्थोक्तिः- अस्य = जगतः, जन्मादि = जन्मस्थितिभङ्गम्,

यतः = यस्मात्, तद् ब्रह्म ।

अधिकरणसार

लक्षणं ब्रह्मणो नास्ति, किं वास्ति नहिं विद्यते ।
जन्मादेरन्यनिष्ठत्वात्सत्यादेश्चाप्रसिद्धितः ॥
ब्रह्मनिष्ठं कारणत्वं स्याल्लक्ष्म स्रग्भुजंगवत् ।
लौकिकान्येव सत्यादीन्यखण्डं लक्षयन्ति हि ॥

## ३ शास्त्रयोनित्वाधिकरणम् सू० ३

### सूत्र- शास्त्रयोनित्वात् ॥ ३ ॥

पदार्थोक्तिः— शास्त्रं प्रति कारणत्वात्, सर्वज्ञं ब्रह्म । शास्त्रगम्यत्वात् ।

अधिकरणसार (प्रथमवर्णक)

न कर्तृ ब्रह्म वेदस्य किं वा कर्तृ, न कर्तृ तत् ।
विरूपनित्यया वाचेत्येवं नित्यत्ववर्णनात् ॥
कर्तृ निःश्वसिताद्युक्तेर्नित्यत्वं पूर्वसाम्यतः ।
सर्वविभासि वेदस्य कर्तृत्वात्सर्वविद् भवेत् ॥

अधिकरणसार (द्वितीयवर्णक)

अस्त्यन्यमेयताप्यस्य किं वा वेदैकमेयता ।
घटवत्सिद्धवस्तुत्वाद्, ब्रह्मान्येनापि मीयते ॥
रूपलिङ्गादिराहित्यान्नास्य मान्तरयोग्यता ।
तं त्वौपनिषदमित्यादौ प्रोक्ता वेदैकमेयता ॥

## ४ समन्वयाधिकरणम् सू० ४

## सूत्र— तत्तु समन्वयात् ।। ४ ।।

पदच्छेदः— तत् तु, समन्वयात् ।

पदार्थोक्तिः— किन्तु तत् ब्रह्म वेदान्तात् स्वातन्त्र्येण एव अवगम्यते न तु कर्तृ-देवादिप्रतिपादनद्वारा कर्मशेषतया उपासनांगतया वा । कुतः ? समन्वयात् ।

### अधिकरणसार (प्रथमवर्णक)

वेदान्ताः कर्तृदेवादिपरा ब्रह्मपरा उत ।
अनुष्ठानोपयोगित्वात् कर्त्रादिप्रतिपादकाः ।।
भिन्नप्रकरणात् लिङ्गषट्काच्च ब्रह्मबोधकः ।
सति प्रयोजनेऽनर्थ— हानेऽनुष्ठानतोऽत्र किम् ।।

### अधिकरणसार (द्वितीयवर्णक)

प्रतिपत्तिं विधित्सन्ति ब्रह्मण्यवसिता उत ।
शास्त्रत्वात्ते विधातारो मननादेश्च कीर्तनात् ।।
नाकर्तृतन्त्रोऽस्ति विधिः शास्त्रत्वं शंसनादपि ।
मननादिः पुरा बोधात् ब्रह्मण्यवसितास्ततः ।।

## ५— ईक्षत्यधिकरणम् सू० ५—११

## सूत्र— ईक्षतेर्नाशब्दम् ।। ५ ।।

पद— ईक्षतेः, न, अशब्दम् ।

पदा० प्रधानं [जगत्कारणम्] न, अशब्दम् = शब्दाप्रतिपाद्यं [हि तत्] [कुतः अशब्दम्] ईक्षतेः = तदैक्षतेति श्रुतौ [जगत्कर्तुः] ईक्षितृत्वेन श्रवणात् ।

**सूत्र- गौणश्चेन्नात्मशब्दात् ॥ ६ ॥**

पद०- गौणः, चेत्, न आत्मशब्दात् ।

पदा०- ईक्षतिशब्दो गौणः- इति चेत्, न, ऐतदात्म्यमिति श्रुतौ जगत्-कारणे आत्मशब्दप्रयोगात् मुख्यमेव ईक्षणं न गौणम् ।

**सूत्र- तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥**

पद०- तन्निष्ठस्य, मोक्षोपदेशात् ।

पदा०- तन्निष्ठस्य = सद्ब्रह्मनिष्ठस्य, मोक्षोपदेशात् = मुक्तिश्रवणात् [अचेतनप्रधानैक्यज्ञानेन तदसम्भवात् ।]

**सूत्र- हेयत्वावचनाच्च ॥ ८ ॥**

पद०- हेयत्वावचनात्, च ।

पदा०- हेयत्वावचनात् = निषेधस्य अनुक्तेः, च = अपि च [न प्रधानं सच्छब्दवाच्यम् ] ।

**सूत्र- स्वाप्ययात् ॥ ९ ॥**

पदा०- स्वाप्ययात = सुषुप्तिकाले जीवस्य स्वस्मिन् स्वपरमार्थस्व-रूपे अधिष्ठाने लयश्रवणात् [चेतनमेव सच्छब्दवाच्यम् न प्रधानम्] ।

## सूत्र- गतिसामान्यात् ॥ १० ॥

पदा०- गतिसामान्यात् = [तत्तद्वेदान्तजन्यानामवगतीनाम्] चेतन-कारणविषयकत्वेन साम्यात् [ न अचेतनं प्रधानम् जगतः कारणम् ] ।

## सूत्र- श्रुतत्वाच्च ॥ ११ ॥

पद०- श्रुतत्वात्, च ।

पदा०- श्रुतत्वात् = 'स कारणं करणाधिपाधिपो' (श्वे० ६।९) इत्यादि-श्रुतेः जगत्कारणस्य सर्वज्ञत्वश्रवणात् [ ब्रह्मैव जगत्कारणम्, न अचेतनम् ] ।

### अधिकरणसार

तदैक्षतेति वाक्येन प्रधानं ब्रह्म वोच्यते ।
ज्ञानक्रियाशक्तिमत्त्वात् प्रधानं सर्वकारणम् ॥
ईक्षणात् चेतनं ब्रह्म क्रियाज्ञाने तु मायया ।
आत्मशब्दात्मतादात्म्ये प्रधानस्य विरोधिनी ॥

## ६— आनन्दमयाधिकरणम् सू० १२-१९

## सूत्र- आनन्दमयोऽभ्यासात् ॥ १२ ॥

पद०- आनन्दमयः, अभ्यासात् ।

पदा०- आनन्दमयः = "अन्योऽन्तर आत्माऽऽनन्दमयः" [तै० २।५] इति श्रुतौ आनन्दमयः, [परमात्मैव न जीवः, कुतः]

अभ्यासात् = आनन्दशब्दस्य बहुश्रुतिषु ब्रह्मण्येव प्रयोगदर्शनात् ।

## सूत्र- विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

पद०— विकारशब्दात्, न, इति, चेत्, न, प्राचुर्यात् ।

पदा०- विकारशब्दात् = मयट्प्रत्ययस्य विकारवाचकत्वात्, न = आनन्दमयः न परमात्मा, इति चेत् न, प्राचुर्यात् = प्राचुर्यार्थेऽपि मयट्प्रत्ययविधानात् [ आनन्दमयः परमात्मैव ]

## सूत्र- तद्धेतुव्यपदेशाच्च ॥ १४ ॥

पद०— तद्धेतुव्यपदेशात्, च ।

पदा०- तद्धेतुव्यपदेशात् = 'को ह्येवान्यात् कः प्राण्यात्' इति श्रुतौ सकलजीवानन्दहेतुत्वस्य ब्रह्मणि कथनात् च = अपि [आनन्दमयः परमात्मैव ] ।

## सूत्र- मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

पद०— मान्त्रवर्णिकम्, एव, च, गीयते ।

पदा०- मान्त्रवर्णिकमेव च = 'सत्यं ज्ञानमनन्तं ब्रह्म' [ तै० २/१] इति मन्त्रवर्णे निर्धारितं ब्रह्मैव गीयते = आनन्दमयवाक्ये कथ्यते ( तस्मात् आनन्दमयः परमात्मैव) ।

## सूत्र- नेतरोऽनुपपत्तेः ॥ १६ ॥

पद०— न इतरः, अनुपपत्तेः ।

पदा०- इतरः = जीवः, न = आनन्दमयो न भवति, (कुतः) अनुपपत्तेः = कामयितृत्वादिधर्माणाम् जीवेऽसम्भवात् (अतः आनन्दमयः परमात्मैव) ।

## सूत्र— भेदव्यपदेशाच्च ॥ १७ ॥

पद०— भेदव्यपदेशात्, च ।

पदा०- भेदव्यपदेशात् = 'रसो वै सः' (तै० २/७) । 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति' इति श्रुतौ आनन्दमयस्य जीवाद् भेदकथनात्, च = अपि (आनन्दमयः परमात्मैव, न जीवः) ।

## सूत्र- कामाच्च नानुमानापेक्षा ॥ १८ ॥

पद०— कामात्, च, न, अनुमानापेक्षा ।

पदा०- कामाच्च = 'सोऽकामयत' [तै० २/६] इति श्रुतौ कामयितृत्वश्रवणात्, अनुमानापेक्षा = अनुमानप्रतिपाद्यप्रधानस्य आशा न = न कर्तव्या [जडस्य प्रधानस्य इच्छायाः असम्भवात्] ।

## सूत्र- अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

पद०— अस्मिन्, अस्य, च, तद्योगं, शास्ति ।

पदा०- 'यदा ह्येवैष' [तै० २/७] इत्यादि श्रुतिः अस्मिन् = आनन्दमये, अस्य = तच्चित्तस्य मुमुक्षोः तद्योगं = तदभेदम्, शास्ति = प्रतिपादयति [अतः आनन्दमयः न प्रधानम्, अचेतने चेतनाभेदा-

सम्भवात्, तस्मात् आनन्दमयः परमात्मैव ] ।

अधिकरणसार (प्रथमवर्णक)

संसारी ब्रह्म वाऽऽनन्दमयः संसार्ययं भवेत् ।
विकारार्थमयट्शब्दात्प्रियाद्यवयवोक्तितः ॥
अभ्यासोपक्रमादिभ्यो ब्रह्माऽऽनन्दमयो भवेत् ।
प्राचुर्यार्थो मयट्शब्दः प्रियाद्याः स्युरुपाधिगाः ॥

(द्वितीय वर्णक)

अन्याङ्गं स्वप्रधानं वा ब्रह्मपुच्छमिति श्रुतम् ।
स्यादानन्दमयस्याङ्गं पुच्छेऽङ्गत्वप्रसिद्धितः ॥
लाङ्गूलासंभवादत्र पुच्छेनाऽऽधारलक्षणा ।
आनन्दमयजीवोऽस्मिन्नाश्रितोऽतः प्रधानता ॥

## ७ अन्तरधिकरणम् सू० २०–२२

### सूत्र- अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

पद०– अन्तः तद्धर्मोपदेशात् ।

पदा०- अन्तः = 'अथ य एषोऽन्तरादित्ये' (छा० १/६/६,७,८) इति श्रुतौ आदित्यमण्डलान्तर्वर्ती हिरण्मयः पुरुषः (न सूर्यः कुतः) तद्धर्मोपदेशात् = अपहतपाप्मत्वादिब्रह्मधर्माणामुपदेशात् (परमेश्वर एव)

### सूत्र—भेदव्यपदेशाच्चान्यः ॥ २१ ॥

पद०– भेदव्यपदेशात्, च, अन्यः ।

पदा०—भेदव्यपदेशात् = 'य आदित्ये तिष्ठन् (बृ० ३।७।९) इति श्रुतौ नियम्यनियामकत्वेन आदित्यब्रह्मणोः भेदश्रवणात्, च = अपि, अन्यः = 'अथ य०' इति श्रुत्युक्तः सूर्याद् भिन्नः (कुतः श्रुति-सामान्यात्) ।

अधिकरणसार

हिरण्मयो देवतात्मा किंवाऽसौ परमेश्वरः ।
मर्यादाधाररूपोक्तेर्देवतात्मैव नेश्वरः ॥
सार्वात्म्यात् सर्वदुरितराहित्याच्चेश्वरो मतः ।
मर्यादाद्या उपास्त्यर्थमीशेऽपि स्युरुपाधिगाः ॥

## ८. आकाशाधिकरणम् सू० २२

### सूत्र— आकाशस्तल्लिङ्गात् ॥२२॥

पद०—आकाशः, तल्लिङ्गात् ।

पदा०- आकाशः = 'आकाश इति होवाच' (छा० १।९।१) इति श्रुतौ उक्तः आकाशः ब्रह्मैव (न भूताकाशः, कुतः) तल्लिङ्गात् = सर्वभूतोत्पत्तिलय- हेतुत्वादि–ब्रह्मलिङ्गसद्भावात् (भूताकाशे तदसंभवात्) ।

अधिकरणसार

आकाश इति होवाचेत्यत्र खं ब्रह्म वाऽत्र खम् ।
शब्दस्य तत्र रूढत्वाद्वाय्वादेः सर्जनादपि ॥

साकाशजगदुत्पत्तिहेतुत्वाच्छ्रौतरूढ़ितः ।
एवकारादिना चाऽत्र ब्रह्मैवाकाशशब्दितम् ॥

## प्राणाधिकरणम् सू०२३

### सूत्र- अत एव प्राणः ॥२३॥

पद०—अतः, एव, प्राणः ।

पदा०—प्राणः = 'प्रस्तोतर्या०' (छा० १।१०। ९') इति श्रुतौ प्राणः परमात्मा (न प्राणवायुः, कुतः) अत एव = सर्वभूतोत्पत्तिलय-हेतुत्वादिब्रह्मलिङ्गादेव ।

अधिकरणसार

मुखस्थो वायुरीशो वा प्राणः प्रस्तावदेवता ।
वायुर्भवेत्तत्र सुप्तौ भूतसारेन्द्रियक्षयात् ॥१॥
संकोचोऽक्षपरत्वे स्यात् सर्वभूतलयश्रुतेः ।
आकाशशब्दवत् प्राणशब्दस्तेनेशवाचकः ॥२॥

## १०. ज्योतिश्चरणाधिकरम् सू०२४-२७

### सूत्र-ज्योतिश्चरणाभिधानात् ॥२४॥

पद०—ज्योतिः, चरणाभिधानात् ।

पदा०—ज्योतिः = 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छा० ३।१३।७) इति श्रुतौ ज्योतिः परमात्मा (न सूर्यादिज्योतिः, कुतः) चरणाभिधानात् = 'पादोऽस्य सर्वा' (छा० ३।१२।६) इति

पूर्ववाक्ये ब्रह्मणः पादत्रयाभिधानात् (तस्यैव ब्रह्मणः अत्र प्रत्यभिज्ञायमानत्वात्) ।

**सूत्र-छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥२५॥**

पद०—छन्दोऽभिधानात् न, इति, चेत्, न, तथा, चेतोऽर्पणनिगदात्, तथा, हि, दर्शनम् ।

पदा०—छन्दोऽभिधानात् = 'गायत्री वा इदं सर्वंभूतम्' (छा० ३।१२।१) इति श्रुतौ गायत्र्याख्यच्छन्दसः उपक्रान्तत्वात् (पादत्रयवत्त्वम् गायत्र्या एव उक्तम् ) न तु ब्रह्मणः, इति चेत् न, तथा = गायत्रीछन्दोद्वारा तदनुगते ब्रह्मणि, चेतोऽर्पणनिगदात् = चित्तप्रक्षेपस्य कथनात् (पादत्रयवत्त्वं ब्रह्मण एवोक्तम् ) । तथा हि दर्शनम् = अन्यत्राऽपि 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' (ऐ० आ० ३।२।३।१२) इत्यादौ विकारद्वारेण ब्रह्मणः उपासनं दृष्टम् ।

**सूत्र—भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२६॥**

पद०—भूतादिपादव्यपदेशोपपत्तेः, च, एवम् ।

पदा०—भूतादिपादव्यपदेशोपपत्तेः = 'गायत्री वा इदं सर्वं०' (छ० ३।१२।१) इति श्रुतौ कथितस्य भूतादिपादत्वस्य ब्रह्मण्येव उपपन्नत्वात् च = अपि एवम् = गायत्रीशब्देन गाय—

ऽप्यनुगतं ब्रह्मैव उच्यते ।

**सूत्र—उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२७॥**

पद०—उपदेशभेदात् न, इति, चेत् न, उभयस्मिन्, अपि, अविरोधात् ।

पदा०—('त्रिपादस्यामृतं दिवि' छा० ३।१२।५) इति गायत्रीवाक्ये ब्रह्मणः ब्रह्माण्डान्तर्वर्तित्वमुक्तम् । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति ज्योतिर्वाक्ये ब्रह्मणः ब्रह्माण्डादुपरि अवस्थान-मुक्तम् तथा च ) उपदेशभेदात् = गायत्रीवाक्यज्योतिर्वाक्ययोः परस्परविरुद्धार्थकत्वात् न = प्रामाण्यं नास्ति = इति चेत् न, उभयस्मिन् अपि = वाक्यद्वयेऽपि अविरोधात् = विरोधाभावात् 'दिवि' इति सप्तमीविभक्तेः लक्षणया पञ्चमीविभक्त्यर्थ-बोधकत्वात् (उभयवाक्ययोः प्रामाण्यमस्तीति सिद्धं ज्योतिर्वा-क्यस्य ब्रह्मबोधकत्वम्) ।

अधिकरणसार

कार्यं ज्योतिरुत ब्रह्म ज्योतिर्दीप्यत इत्यदः ।
ब्रह्मणोऽसंनिधेः कार्यं तेजो लिङ्गबलादपि ॥१॥
चतुष्पात् प्रकृतं ब्रह्म यच्छब्देनाऽनुवर्त्यते ।
ज्योतिः स्याद् भासकं ब्रह्म लिङ्गन्तूपाधियोगतः ॥२॥

## ११. प्रतर्दनाधिकरणम् सू० २८-३१

**सूत्र—प्राणस्तथानुगमात् ॥२८॥**

पद०— प्राणः, तथा, अनुगमात् ।

पदा०- प्राणः = 'प्राणोऽस्मि प्रज्ञात्मा' (कौ० ३/१/२/३) इति श्रुतौ प्राणः परमात्मैव (न प्राणवायुः, कुतः ?) तथा = ब्रह्मपरत्वेन, अनुगमात् = पदानाम् अन्वयावगमात् 'प्राण एव प्रज्ञात्मा (कौ० ३/८) आनन्दोऽजरोऽमृतः' इति वाक्ये ब्रह्मलिंगा— भिधानात् ।

**सूत्र- न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्ब- न्धभूमा ह्यस्मिन् ।। २९ ।।**

पद०— न, वक्तुः, आत्मोपदेशात् इति, चेत्, अध्यात्मसम्बन्धभूमा, हि, अस्मिन् ।

पदा०- वक्तुः = इन्द्रस्य, आत्मोपदेशात् स्वोपदेशात् (आत्मविशिष्टे- न्द्रशरीरमेव उपास्यम्) इति चेत् न, अध्यात्मसम्बन्धभूमा = आनन्दामृतत्वादिप्रत्यगात्मलिङ्गबाहुल्यम् अस्मिन् = अस्मिन् वाक्ये (उपलभ्यते, अतः ब्रह्मैवोपास्यम्, न इन्द्रः) ।

**सूत्र- शास्त्रदृष्ट्या तूपदेशो वामदेववत् ।। ३० ।।**

पद०— शास्त्रदृष्ट्या, तु, उपदेशः, वामदेववत् ।

पदा०- उपदेशस्तु = 'मामेव विजानीहि' इत्युपदेशस्तु, शास्त्रदृष्ट्या = शास्त्रजन्यब्रह्मसाक्षात्कारवत्त्वात् (उपपद्यते), वामदेववत्

= वामदेवादिवत् (इन्द्रस्यापि ब्रह्मज्ञानित्वात् अतः 'प्राणोऽस्मि' (कौ० ३/१/२.३) श्रुतौ प्राणः ब्रह्मैव) ।

**सूत्र–जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३१ ॥**

पद०– जीवमुख्यप्राणलिङ्गात्, न, इति, चेत्, न, उपासात्रैविध्यात्, आश्रितत्वात्, इह, तद्योगात् ।

पदा०– जीवमुख्यप्राणलिङ्गात् = 'वक्तारं विद्यात्' इति जीवलिङ्गात् इदं शरीरं परिगृह्योत्थापयति' इति मुख्यप्राणलिङ्गात् न = 'प्राणोऽस्मि प्रज्ञात्मा' [कौ० ३/१/२,३] इति श्रुतेः न केवलं ब्रह्मपरत्वम् [किन्तु जीवमुख्यप्राणोभयपरत्वम् अपि] इति चेत् न, उपासात्रैविध्यात् = उपासनात्रयस्वीकारप्रसङ्गात् [तस्य च उपक्रमोपसंहारविरोधेनानिष्टत्वात्] आश्रितत्वात् = अन्यत्र ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मवृत्तित्वाङ्गीकारात्, इह = अस्यां श्रुतावपि, तद्योगात् = हिततमत्वादिब्रह्मलिङ्गानां विद्यमानत्वात् [प्राणशब्देन ब्रह्मैवोच्यते, न जीवादिः] ।

अधिकरणसार

प्राणोऽस्मीत्यत्र वाय्विन्द्रजीवब्रह्मसु संशयः ।
चतुर्णां लिङ्गसद्भावात्पूर्वपक्षस्त्वनिर्णयः ॥ १ ॥

ब्रह्मणोऽनेकलिङ्गानि तानि सिद्धान्यनन्यथा ।
अन्येषामन्यथासिद्धेर्व्युत्पाद्यं ब्रह्म नेतरत् ॥ २ ॥



॥ इति प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥

# प्रथमाध्याये द्वितीयः पादः

## १. सर्वत्र प्रसिद्ध्यधिकरणम् सू० १—८

### सूत्र- सर्वत्र, प्रसिद्धोपदेशात् ॥ १ ॥

पद०— सर्वत्र, प्रसिद्धोपदेशात् ।

पदा०- सर्वत्र = सर्वेषु वेदान्तेषु, प्रसिद्धोपदेशात् = प्रसिद्धस्य जगत-कारणस्य ब्रह्मण एव 'सर्वं खल्विद' [छा० ३।१४।१] इत्यादिवाक्ये उपक्रान्तस्य 'मनोमयः' [छा० ३।१।४१–२] इति वाक्ये उपास्यत्वेन उपदेशात् [मनोमयः ब्रह्मैव न जीवः] ।

### सूत्र— विवक्षितगुणोपपत्तेश्च ॥ २ ॥

पद०— विवक्षितगुणोपपत्तेः, च ।

पदा०- विवक्षितगुणोपपत्तेः = उपासनार्थम् उपदिष्टानां सत्य-सङ्कल्पत्वभारूपत्वादिगुणानां ब्रह्मण्येव उपपत्तेः, च = अपि [मनोमयः ब्रह्मैव, न जीवः] ।

### सूत्र- अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

पद०— अनुपपत्तेः, तु, न, शारीरः ।

पदा०- अनुपपत्तेः = सत्यसङ्कल्पत्वादिविवक्षितगुणानां जीवे समन्व-याभावात्, शारीरः = जीवः, न = सत्यसङ्कल्पत्वादिगुणैः न उपास्यः, तु = एव (ब्रह्मैव उपास्यम्] ।

## सूत्र– कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

पद०– कर्मकर्तृव्यपदेशात्, च ।

पदा०- कर्मकर्तृव्यपदेशात् = 'एतमितः प्रेत्याभिसम्भवितास्मि' (छा०३/१४/४) इति श्रुतौ 'एतम्' इति प्रकृतस्य ब्रह्मणः प्राप्यत्वेन 'अभिसम्भवितास्मि' इति शारीरस्य कर्तृत्वेन व्यपदेशात्, च = अपि [न शारीरः उपास्यः, किन्तु ब्रह्मैव मनोमयत्वा-दिगुणैः उपास्यम्] ।

## सूत्र— शब्दविशेषात् ॥ ५ ॥

पदा०-शब्दविशेषात् = 'अन्तरात्मन् पुरुषो हिरण्मयः' (शत० ब्रा० १०/६/३/२) इति श्रुत्यन्तरे जीवपरमात्माभिधायकयोः सप्तम्यन्तप्रथमान्तान्तरात्मन्पुरुषशब्दयोः भेदात् (न शारीरः उपास्यः, किन्तु ब्रह्मैवोपास्यम्) ।

## सूत्र— स्मृतेश्च ॥ ६ ॥

पद०— स्मृतेः, च ।

पदा०-स्मृतेः = 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (गी०१८/६१) इत्यादौ जीवब्रह्मणोः भेदस्मरणात्, च = अपि [जीवः न उपास्यः] ।

## सूत्र- अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥

पद०— अर्भकौकस्त्वात्, तद् व्यपदेशात्, च, न, इति, चेत् न, निचाय्यत्वात् एवम् व्योमवत्, च ।

तदा०- अर्भकौकस्त्वात् = अल्पस्थानस्थितत्वात्, तद्व्यपदेशाच्च = अणीयानिति स्वशब्देन अणीयस्त्वव्यपदेशाच्च (जीव एव उपास्यः) न = न परमात्मा उपास्यः, इति चेत् न, एवम् = अर्भकौकस्त्वाणीयस्त्वादिविशिष्टत्वरूपेण, निचाय्यत्वात् = परमात्मनः उपास्यत्वात् व्योमवच्च = यथा सर्वगतमपि व्योम सूच्याद्यवच्छेदेन अर्भकौकोऽणीयश्च व्यपदिश्यते तद्वत् ब्रह्मापि व्यपदिश्यते, (अतः ब्रह्मैवोपास्यम्) ।

## सूत्र- सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

पद०— सम्भोगप्राप्तिः, इति, चेत्, न, वैशेष्यात् ।

पदा०- सम्भोगप्राप्तिः = [परमात्मनः सर्वगतत्वे चेतनत्वाविशेषात् जीववत्] सुखदुःखानुभवप्रसङ्गः, इति चेत् न, वैशेष्यात् = जीवब्रह्मणोः भोक्तृत्वाभोक्तृत्वादिविशेषसद्भावात् [न जीवभोगेन परमात्मनः भोगप्राप्तिः, अतः मनोमयत्वादिगुणकः परमात्मैवोपास्य इति सिद्धम् । ]

अधिकरणसार

मनोमयोऽयं शारीर ईशो वा प्राणमानसे ।
हृदयस्थित्यणीयस्त्वे जीवे स्युस्तेन जीवगाः ॥

शमवाक्यगतं ब्रह्म तद्धितादिरपेक्षते ।
प्राणादियोगश्चिन्त्यार्थश्चिन्त्यं ब्रह्म प्रसिद्धितः ॥

## २— अत्त्रधिकरणम् सू० ९-१०

## सूत्र- अत्ता चराचरग्रहणात् ॥ ९ ॥

पद० अत्ता, चराचरग्रहणात् ।

पदा०- अत्ता = ['यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' (कठवल्ली १/२/२४) इत्यादिश्रुतौ प्रतीयमानः] भक्षकः (परमात्मैव, नाग्निः जीवो वा, कुतः) चराचरग्रणात् = उक्तश्रुतौ लक्षणया स्थावरजङ्गमयोराद्यत्वेन ग्रहणात् (सर्वसंहर्त्तारं परमात्मानं विनान्यस्य चराचरात्तृत्वायोगात् ।

## सूत्र- प्रकरणाच्च ॥ १० ॥

पद०— प्रकरणात्, च ।

पदा०- प्रकरणात् = 'न जायते म्रियते वा विपश्चित्' (काठ० १/२/१८) इत्यादिना ब्रह्मणः प्रकृतत्वात्, च = 'क इत्था वेद यत्र सः' इति श्रुतिदुर्विज्ञेयत्वरूपलिङ्गाच्च ( अत्तृवाक्योक्तः अत्ता परमात्मैव) ।

### अधिकरणसार

जीवोऽग्निरीशो वाऽत्ता स्यादोदने जीव इष्यताम् ।
स्वाद्वत्तीति श्रुतेर्वह्निर्वाग्निरन्नाद इत्यदः ॥

ब्रह्मक्षत्रादि जगतो भोज्यत्वात् स्यादिहेश्वरः ।
ईशप्रश्नोत्तरत्वाच्च संहारस्तस्य चात्तृता ॥

## ३ गुहाप्रविष्टाधिकरणम् सू० ११—१२

### सूत्र- गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

पद०— गुहाम् प्रविष्टौ, आत्मानौ, हि, तद्दर्शनात् ।

पदा०- गुहां प्रविष्टौ = 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे' ( काठ० १/३/१ ) इति श्रुतौ गुहाप्रविष्टत्वेन निर्दिष्टौ जीवपरात्मानौ एव [न बुद्धिजीवौ, कुतः] तद् दर्श–नात् = सङ्ख्याश्रवणे सङ्ख्यावतोरेकरूपत्वस्य लोके दर्शनात् (जीवपरमात्मनोः चेतनत्वेनैकरूपत्वात् बुद्धिजीवयोः तत्त्वेन तदभावात्) ।

### सूत्र- विशेषणाच्च ॥ १२ ॥

पद०— विशेषणात्, च ।

पदा०-विशेषणात् = (सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्, (काठ० (१/३/९) 'अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (काठ० १/२/१२) इत्यादौ जीवपरमात्मनोः गन्तृगन्तव्यत्वेन मन्तृमन्तव्यत्वेन च विशेषितत्वात्, च = अपि (गुहां प्रविष्टौ जीवपरमात्मानावेव') ।

अधिकरणसार

गुहां प्रविष्टौ धीजीवौ जीवेशौ वा हृदि स्थितौ ।
छायातपाख्यदृष्टान्ताद् धीजीवौ स्तो विलक्षणौ ॥ १ ॥
पिबन्ताविति चैतन्यद्वयं जीवेश्वरौ ततः ।
हृत्स्थानमुपलभ्यं स्याद्वैलक्षण्यमुपाश्रितः ॥ २ ॥

## ४- अन्तराधिकरणम् सू० १३—१७

### सूत्र- अन्तर उपपत्तेः ॥ १३ ॥

पद०- अन्तरः, उपपत्तेः ।

पदा०- अन्तरः = 'य एषोऽक्षिणि पुरुषो दृश्यते' (छा० ४/१५/१) इति श्रुतौ प्रतिपाद्यमानः अक्षिमध्यगतः (परमात्मैव, न छायात्मादिः, कुतः) उपपत्तेः = इहोक्तानाम् आत्मत्वामृतत्वाभयत्वादिधर्माणां परमात्मन्येवोपपत्तेः (अतः नेत्राभ्यन्तरः परमात्मैव) ।

### सूत्र- स्थानादिव्यपदेशाच्च ॥ १४ ॥

पद०- स्थानादिव्यपदेशात, च ।

पदा०- स्थानादिव्यपदेशात् = 'यश्चक्षुषि तिष्ठन्,' तस्योदिति नाम,' 'हिरण्यश्मश्रुः' (छा० १/६/७,६) इति स्थाननामरूपाणां व्यपदेशात्, (इह) च = अपि (परमात्मनः अक्षिस्थानत्वव्यपदेशो नानुपपन्न इति अत्र परमात्मैव आन्तरः ) ।

### सूत्र- सुखविशिष्टाभिधानादेव च ॥ १५ ॥

पद०- सुखविशिष्टाभिधानात् एव, च ।

पदा०- सुखविशिष्टाभिधानादेव = 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छा० ४/१०/५) इति वाक्योपक्रमे श्रूयमाणसुखविशिष्टब्रह्मण एव अत्र अभिधानात्, च = अपि (इह परमात्मैव अन्तरः)।

**सूत्र- श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥**

पद०- श्रुतोपनिषत्कगत्यभिधानात्, च।

पदा०- श्रुतोपनिषत्कगत्यभिधानात् = तत्त्वज्ञानिनो या गतिः देवयानाख्या श्रुतिस्मृतिषु प्रतिपादिता, तस्या एव इह 'आदित्याच्चन्द्रमसम्' (छा० ४/१५/५) इत्यादौ अक्षिस्थपुरुषज्ञस्य कथनात्, च = अपि (अक्षिस्थस्य पुरुषस्य ब्रह्मत्वम्)।

**सूत्र- अनवस्थितेरसम्भवाच्च नेतरः ॥ १७ ॥**

पद०- अनवस्थितेः, असम्भवात्, च, न, इतरः।

पदा०- अनवस्थितेः, = उपासकस्य अक्षिणि प्रतिबिम्बसम्पादकबिम्बभूतपुरुषान्तरस्य सर्वदा अनवस्थानाद्, असम्भवाच्च = अमृतत्वादिगुणानां छायात्मादिषु असम्भवात् अपि इतरः = ब्रह्मभिन्नः, न = न अक्षिस्थाने उपदिश्यते (किन्तु परमात्मा एव उपदिश्यते)।

अधिकरणसार

छायाजीवौ देवतेशौ वाऽप्तो योऽक्षिणि दृश्यते।
आधारदृश्यतोक्त्येशादन्येषु त्रिषु कश्चन ॥

कं खं ब्रह्म यदुक्तं प्राग् तदेवाक्षिण्युपासते ।
वामनीत्वादिनाऽन्येषु नामृतत्वादिसम्भवः ।।

## ५. अन्तर्याम्यधिकरणम् सू० १८-२०

### सूत्र- अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ।

पद०- अन्तर्यामी, अधिदैवादिषु, तद्धर्मव्यपदेशात् ।

पदा०- अधिदैवादिषु = 'यः पृथिव्याम् तिष्ठन्' (बृ० ३/७/३) इत्यादिश्रुतिषु (श्रूयमाणः), अन्तर्यामी = नियामकः (परमात्मैव, कुतः ? श्रुतौ ) तद्धर्मव्यपदेशात् = आत्मत्वामृतत्वादिपरमात्मधर्माणमुपदेशात् ।

### सूत्र- न च स्मार्तमतद्धर्माभिलापात् ।। १९ ।।

पद०- न, च, स्मार्तम्, अतद्धर्माभिलापात् ।

पदा०-स्मार्तं च = साङ्ख्यस्मृतिकल्पितम् प्रधानं तु, न = नान्तर्यामी (कुतः) अतद्धर्माभिलापात् = प्रधानभिन्नवृत्तिधर्माणां द्रष्टृत्व-श्रोतृत्वादीनामिहाऽभिधानात् ।

### सूत्र- शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ।।२०।।

पद०- शारीरः, च, उभये, अपि, भेदेन, एनम्, अधीयते ।

पदा०-शारीरश्च = जीवोऽपि (नाऽन्तर्यामी) हि = यतः, उभयेऽपि = काण्वाः माध्यन्दिनाश्च, एनम् = शारीरम् भेदेन = अन्तर्यामिणो भेदेन (अन्तर्यामिनियम्यत्वेन) अधीयते = पठन्ति, (अतः

अधिदैवादिश्रुतिषु प्रतीयमानः परमात्मैव ) ।

अधिकरणसार

प्रधानं जीव ईशो वा कोऽन्तर्यामी जगत् प्रति ।
कारणत्वात्प्रधानं स्याज्जीवो वा कर्मणो मुखात् ॥
जीवैकत्वामृतत्वादेरन्तर्यामी परेश्वरः ।
द्रष्टृत्वादेर्न प्रधानं न जीवोऽपि नियम्यतः ॥

## ६ अदृश्यत्वाद्यधिकरणम् सू० २१- २३

### सूत्र- अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

पद०– अदृश्यत्वादिगुणकः, धर्मोक्तेः ।

पदा०- अदृश्यत्वादिगुणकः = 'यत्तदद्रेश्यमग्राह्यम् (मु० १/१/५-६) इत्यादि श्रुत्युक्तादृश्यत्वादिगुणविशिष्टः भूतयोनिः (परमात्मैव, न प्रधानं जीवो वा, कुतः) धर्मोक्तेः = 'यः सर्वज्ञः सर्वविद् (मु० १/१/९) इत्यादिना सर्वज्ञत्वादिपरमेश्वरधर्माणां भूतयोनौ निर्देशात्, प्रधाने जीवे वा तादृशधर्माभावात् ।

### सूत्र- विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

पद०– विशेषणभेदव्यपदेशाभ्याम् च, न, इतरौ ।

पदा०- विशेषणभेदव्यपदेशाभ्याम् च नेतरौ = 'दिव्यो ह्यमूर्तः पुरुषः' [मु० २/१/२] इत्यादिना भूतयोनेः दिव्यत्वादिविशेषणात् न जीवः [भूतयोनिः] 'अक्षरात् परतः परः' इति अक्षर–

परमात्मनोर्भेदोक्तेः न प्रधानं [भूतयोनिः, किन्तु परमात्मैव] ।

## सूत्र— रूपोपन्यासाच्च ॥२३॥

पद०— रूपोपन्यासात्, च

पदा०—रूपोपन्यासात् = 'अग्निर्मूर्धा' (मु० २।१।४) इत्यादिना भूतयोनेः सर्वात्मकत्वकथनात्, च = अपि (परमात्मैव भूतयोनिः) ।

### अधिकरणसार

भूतयोनिः प्रधानं वा जीवो वा यदि वेश्वरः ।
अ.द्यौ पक्षावुपादाननिमित्त त्वाभिधानतः ॥१॥
ईश्वरो भूतयोनिः स्यात्सर्वत्वादिकीर्तनात् ।
दिव्याद्युक्तेर्न जीवः स्यान्न प्रधानं भिदोक्तितः ॥२॥

### ७. वैश्वानराधिकरणम् सू० २४—३२

## सूत्र—वैश्वानरः साधारणशब्द विशेषात् ॥२४॥

पद०—वैश्वानरः, साधारणशब्दविशेषात् ।

पदा०—वैश्वानरः = 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते,[छा० ५।१।८।२] इत्यादिश्रुतौ प्रतीयमानः श्रूयमाणः वैश्वानरः [परमात्मैव, कुतः] साधारणशब्दविशेषात् = यद्यपि जाठरभूताग्न्यादित्यदेवतासु जीवपरमात्मनोश्च साधारणौ वैश्वानरात्मशब्दौ, तथापि 'मूर्धैव सुतेजाः' इति विशेषणस्य

परमात्मनि एव सम्भवात् ।

**सूत्र—स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥**

पद०— स्मर्यमाणम्, अनुमानम् स्यात् इति ।

पदा०- स्मर्यमाणम् = 'यस्याग्निरास्यं द्यौर्मूर्धा' इत्यादिस्मृत्युक्तं त्रैलोक्यात्मकं रूपम्, स्वमूलभूतां श्रुतिमनुमापयत्, अनुमानं = (परमात्मनः) ज्ञापकम्, स्यात् = भवति, इति = तस्मात् (वैश्वानरः परमात्मैव) ।

**सूत्र—शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते ॥२६॥**

पद०— शब्दादिभ्यः, अन्तःप्रतिष्ठानात्, च, न, इति, चेत्, न, तथा, दृष्ट्युपदेशात्, असम्भवात् पुरुषम्, अपि च, एनम् अधीयते

पदा०- शब्दादिभ्यः = वैश्वानरशब्दाग्नित्रेताकल्पनप्राणाहुत्याधारतासङ्कीर्तनेभ्यः, अन्तःप्रतिष्ठानाच्च = शरीरान्तःस्थित्तिश्रवणाच्च, न = न वैश्वानरः परमात्मा इति चेत्, न, तथा = तस्मिन् जाठरे, दृष्ट्युदेशात् = परमात्मदृष्टेरुपदेशात् असम्भवात् = जाठरे 'मूर्वैव सुतेजाः' इत्यादेरसम्भवात् चकिञ्च, एनम् = वैश्वानरम् पुरुषमपि, अधीयते = पठन्ति (वाजसनेयिनः, अतः वैश्वावरः परमात्मैवेति सिद्धम्) ।

**सूत्र- अत एव न देवता भूतं च ॥ २७ ॥**

पद०— अतः, एव, न, देवता, भूतम्, च ।

पदा०- अतएव = द्यु मूर्धत्वादिधर्माणामसंभवादेव, भूतम् = भूताग्निः, देवता च = अग्न्यभिमानिनी देवता वा, न = वैश्वानरशब्दार्थो न भवति, भावति, [किन्तु जाठराग्न्युपाधिकः परमात्मैव] ।

**सूत्र- साक्षादप्यविरोधं जैमिनिः ॥२८॥**

पद०— साक्षाद्, अपि, अविरोधम्, जैमिनिः ।

पदा०- साक्षाद् अपि = जाठररूपोपाधि विनाऽपि, [ब्रह्मणि वैश्वानर-शब्दस्य] अविरोधम् = विरोधाभावम्, जैमिनिः = जैमिनि—नामको महर्षिः (मन्यते) ।

**सूत्र- अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥**

पद०— अभिव्यक्तेः, इति, आश्मरथ्यः ।

पदा०- अभिव्यक्तेः = [उपासकानामनुग्रहाय हृदयाद्युपासनास्थानेषु प्रादेशमात्रपरिमाणस्यैव परमेश्वरस्य] अभिव्यक्तेः, इति = प्रादेशमात्रश्रुतिरुपपद्यते इति, आश्मरथ्यः, (मन्यते) ।

**सूत्र— अनुस्मृतेर्बादरिः ॥ ३० ॥**

पद०— अनुस्मृतेः, बादरिः ।

पदा०- अनुस्मृतेः = प्रादेशमात्रहृदयस्थेन मनसा ध्यानात् [पमेश्वरः प्रादेशमात्र इत्युच्यते इति] बादरिः आचार्यः (मन्यते)

**सूत्र- सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति ॥३१॥**

पद०— सम्पत्तेः, इति, जैमिनिः, तथाहि दर्शयति ।

पदा०- सम्पत्तेः = मूर्धादिचुबुकान्तप्रादेशमात्रस्थाने सम्पत्त्या वैश्वानरस्योपास्यत्वात् [परमेश्वरस्य प्रादेशमात्रत्वम्] इति जैमिनिः आचार्यः मनुते । तथाहि दर्शयति = वाजसनेयि-ब्राह्मणमपि वैश्वानरस्य प्रादेशमात्रत्वसम्पत्तिं व्यपदिशति ।

**सूत्र- आमनन्ति चैनमस्मिन् ॥ ३२ ॥**

पद०— आमनन्ति, च, एनम्, अस्मिन् ।

पदा०—एनम् = परमेश्वरम्, अस्मिन् = मूर्धचिबुकान्तराले, आमनन्ति, च = उपास्यं ब्रुवन्ति जाबालाः ।

**अधिकरणसार**

वैश्वानरः कौक्षभूतदेवजीवेश्वरेषु कः ।
वैश्वानरात्मशब्दाभ्यामीश्वरान्येषु कश्चन ॥
द्युमूर्धत्वादितो ब्रह्म शब्दाच्चेश्वर इष्यते ।
वैश्वानरात्मशब्दौ तावीश्वरस्यापि वाचकौ ॥

॥ प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥

# प्रथमाध्याये तृतीयः पादः

## १. द्युभ्वाद्यधिकरणम् सू० १—७

### सूत्र—द्युभ्वाद्यायतनं स्वशब्दात् ॥१॥

पद०—द्युभ्वाद्यायतनम् स्वशब्दात् ।

पदा०—द्युभ्वाद्यायतनम् = 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतम्' [मु० २।२।५] इत्यादिश्रुतौ प्रतीयमानं द्युभ्वादीनामधिष्ठानं [ब्रह्मैव कुतः] स्वशब्दात् = परब्रह्मवाचकात्मशब्दस्य श्रुतौ विद्यमानत्वात् ।

### सूत्र—मुक्तोपसृप्यव्यपदेशात् ॥२॥

पदा०— मुक्तोपसृप्यव्यपदेशात् = 'तथा विद्वान् नामरूपाद्विमुक्तः' (मु०३।२।८) इत्यादिश्रुतौ ब्रह्मणो मुक्तप्राप्यत्वेन व्यपदिश्यमानत्वात् (द्युभ्वाद्यायतनं ब्रह्मैव) ।

### सूत्र—नानुमानमतच्छब्दात् ॥३॥

पद०— न, अनुमानम्, अतच्छब्दात् ।

पदा०—अनुमानम् = सांख्यस्मृतिकल्पितं प्रधानम्' न = न द्युभ्वाद्यायतनम्, (कुतः) अतच्छब्दात् = 'यस्मिन् द्यौः०' इत्यादिश्रुतौ प्रधानप्रतिपादकशब्दाश्रवणात् ।

### सूत्र—प्राणभृच्च ॥४॥

पद०—प्राणभृत् च ।

पदा०—प्राणभृत् = शारीरच = अपि न द्युभ्वाद्याश्रयः (कुतः) 'यस्मिन् द्यौः' इत्यादिश्रुतौ जीववाचकशब्दाभावात् ।

**सूत्र—भेदव्यपदेशात् ॥५॥**

पदा०— भेदव्यपदेशात् = 'तमेवैकं जानथ' इति श्रुतौ ज्ञातृज्ञेयभावेन जीवपरयोर्भेदेन व्यपदिश्यमानत्वात् (न जीवः द्युभ्वाद्याश्रयः)।

**सूत्र- प्रकरणात् ॥६॥**

पदा०— प्रकरणात् = 'कस्मिन्नु भगवो विज्ञाते' (मु० १।१।३) इत्युपक्रमाद् ब्रह्मण एवेदं प्रकरणम्, तस्मात् (न जीवो द्युभ्वाद्याश्रयः) ।

**सूत्र—स्थित्यदनाभ्याञ्च ॥७॥**

पद०—स्थित्यदनाभ्याम, च ।

पदा०—स्थित्यदनाभ्याम् = 'द्वा सुपर्णा' (मु० ३।१।१) इति मन्त्रे औदासीन्यपूर्वकस्थिति- कर्मफलभोगाभ्यां परक्षेत्रज्ञयोर्भेद-निर्देशात्, च = अपि (न जीवः द्युभ्वाद्याश्रयः, किन्तु ब्रह्मैव)

अधिकरणसार

सूत्रः प्रधानं भोक्तेशो द्युभ्वाद्यायतनं भवेत् ।
श्रुतिस्मृतिप्रसिद्धिभ्यां भोक्तृत्वाच्चेश्वरेतरः ॥१॥
नाद्यौ पक्षावात्मशब्दान्न भोक्ता मुक्तगम्यतः ।
ब्रह्मप्रकरणादीशः सर्वज्ञत्वादितस्तथा ॥२॥

## २. भूमाधिकरणम् सू० ८–९

### सूत्र—भूमा संप्रसादादध्युपदेशात् ॥८॥

पद०—भूमा, संप्रसादाद्, अधि, उपदेशात् ।

पदा०—भूमा = 'भूमा त्वेव विजिज्ञासितव्यः' इति श्रुत्युक्तो भूमा (परमात्मैव, कुतः) सम्प्रसादादधि = प्राणोपदेशानन्तरम्, उपदेशात् = उपदिश्यमानत्वात् ।

### सूत्र—धर्मोपपत्तेश्च ॥९॥

पद०—धर्मोपपत्तेः, च

पदा०—धर्मोपपत्तेः = 'यत्र नान्यत्पश्यति' इत्यादिनोक्तानां सर्वव्यवहाराभावादिभूमधर्माणाम् परमात्मन्येवोपपत्तेः, च = अपि [भूमा परमात्मैव] ।

अधिकरणसार

भूमा प्राणः परेशो वा प्रश्नप्रत्युक्तिवर्जनात् ॥
अनुवर्त्यातिवादित्वं भूमोक्तेर्वायुरेव सः ॥१॥
विच्छिद्यैष त्विति प्राणं सत्यस्योपक्रमात्तथा ।
महोपक्रम आत्मोक्तेरीशोऽद्वैतवारणात् ॥२॥

## अक्षराधिकरणम् सू० १०-१२

### सूत्र—अक्षरमम्बरान्तधृतेः ॥ १० ॥

पद०—अक्षरम्, अम्बरान्तधृतेः ।

पदा०—अक्षरम् = एतद्वै तदक्षरं गार्गि (बृ० ३।८।७०८) इति श्रुत्यक्तमक्षरं (ब्रह्मैव, कुतः) अम्बरान्तधृतेः = पृथिव्यादेराकाशान्तस्य विकारजगतस्य धारणात् ।

## सूत्र—सा च प्रशासनात् ॥११॥

पद०— सा, च, प्रशासनात् ।

पदा०—सा च = अम्बरान्तधृतिश्च (परमेश्वरस्यैव कर्म नाऽचेतस्य, कुतः) प्रशासनात् = 'एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ० ३।८।९) इत्यादिना प्रशासनश्रवणात् ।

## सूत्र-अन्यभावव्यावृत्तेश्च ॥१२॥

पद०— अन्यभावव्यावृत्तेः, च ।

पदा०— अन्यभावव्यावृत्तेः—प्रधानादिधर्मभूताचेतनत्वरहितत्वात्, च = अपि (न अक्षरं प्रधानादि, किन्तु ब्रह्मैव) ।

अधिकरणसार

अक्षरं प्रणवः किं वा ब्रह्म लोकेऽक्षराभिधा ।
वर्णे प्रसिद्धा तेनाऽत्र प्रणवः स्यादुपास्तये ॥१॥
अव्याकृताधारतोक्तेः सर्वधर्मनिषेधतः ।
शासनात् द्रष्टृतादेश्च ब्रह्मैवाक्षरमुच्यते ॥२॥

## ४—ईक्षतिकर्माधिकरणम् सू०—१३

## सूत्र- ईक्षतिकर्मव्यपदेशात् सः ॥ १३ ॥

पद०— ईक्षतिकर्मव्यपदेशात्, सः ।

पदा०- सः = 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्र० ५/२/५) इति श्रुतौ ध्येयत्वेनोपदिष्टः (परमात्मैव, नापरं ब्रह्म, कुतः) ईक्षतिकर्मव्यपदेशात् = 'परात् परं पुरिशयं पुरुषमीक्षते' इति वाक्यशेषे ध्येयस्य दर्शनविषयत्वेन व्यपदेशात् (कल्पितस्य दर्शनविषयत्वासम्भवात् )।

अधिकरणसार

त्रिमात्रप्रणवे ध्येयमपरं ब्रह्म वा परम् ।
ब्रह्मलोकफलोक्त्यादेरपरं ब्रह्म गम्यते ॥ १ ॥
ईक्षितव्यो जीवघनात्परस्तत्प्रत्यभिज्ञया ।
भवेद् ध्येयं परं ब्रह्म क्रममुक्तिः फलिष्यति ॥ २ ॥

## ५— दहराधिकरणम् सू० १४—२१

## सूत्र- दहर उत्तरेभ्यः ॥ १४ ॥

पद०— दहरः, उत्तरेभ्यः ।

पदा०- दहरः = 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' (छां० ८/१/१) इत्यादिश्रुतौ प्रतीयमानो दहराकाशः (परमात्मैव, कुतः) उत्तरेभ्यः = वाक्यशेषगतेभ्य आकाशोपमानत्व-द्यावापृथिव्यधिष्ठानत्वात्मत्वापहत-

पाप्मत्वादिहेतुभ्यः ।

**सूत्र-गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च ॥१५॥**

पद०– गतिशब्दाभ्याम्, तथाहि, दृष्टम्, लिङ्गम्, च ।

पद०– गतिशब्दाभ्याम् = 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छा०८/३/२) इति दहरवाक्यशेषोक्तप्रत्यहगमनब्रह्मलोकशब्दाभ्यां (प्रतीयते– दहरः ब्रह्मैवेति, किञ्च) तथाहि दृष्टम् = 'सता सोम्य तदा सम्पनो भवति (छा० ६/८/१) इति दृष्टम् श्रुत्यन्तरे। लिङ्ग च = प्रत्यहं हिरण्यगर्भलोकगमनासम्भवाद् ब्रह्मैव लोक इति सामाना—धिकरण्यपरिग्रहे अहरहर्गमनं निषादस्थपतिन्यायश्च हेतुः ।

**सूत्र–धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धे ॥ १६ ॥**

पद०– धृतेः, च, महिम्नः, अस्य, अस्मिन्, उपलब्धेः ।

पदा०- धृतेश्च = 'अथ य आत्मा स सेतुर्विधृतिः' [छा० ८/४/१] इति श्रुताया धृतेरपि हेतोः दहराकाशः परमात्मैव, अस्य महिम्नः = अस्य च सर्वलोकविधारणलक्षणमहिम्नः, अस्मिन् = परमात्मनि, उपलब्धेः 'एष भूतपाल एष सेतुर्विधरणः' इत्यादिश्रुत्यन्तरेऽप्युपलब्धेः [अत्र धृतिः परमात्मन एव] ।

**सूत्र- प्रसिद्धेश्च ॥ १७ ॥**

पद० प्रसिद्धेः, च ।

पदा०- प्रसिद्धेः = 'आकाशो वै नाम नामरूपयोर्निर्वहिता' [ छा० ८/१४/१] इत्यादिश्रुतौ आकाशशब्दस्य परमात्मन्येव प्रसिद्धेः, च = अपि (दहराकाशः परमात्मैव) ।

## सूत्र- इतरपरामर्शात्स इति चेन्नासम्भवात् ।।१८।।

पद०- इतरपरामर्शात् सः, इति, चेत् न, असम्भवात् ।

पदा०- इतरपरामर्शात् = 'एष सम्प्रसादः' [छा० ८/३/४] इति सम्प्रसादशब्देन अस्मिन् प्रकरणे, इतरस्य = जीवस्य परामर्शात्, सः = जीवः (दहराकाशः) इति चेत्, न, असम्भवात् = आकाशोपमेयत्वापहतपाप्मत्वादिधर्माणां जीवेऽसम्भवात् ।

## सूत्र- उत्तराच्चेदाविर्भूतस्वरूपस्तु ।। १९ ।।

पद०- उत्तराद् चेद्, आविर्भूतस्वरूपः, तु ।

पदा०- उत्तराद् = 'य एषोऽक्षिणि पुरुषो दृश्यते' [छा० ८/७/४] इत्याद्युत्तरप्रजापतिवाक्याद् (जीवेऽपहतपाप्मत्वादिधर्मोक्तेः जीव एव दहराकाश इति) चेत्, तु = नैतदेवम् (यतः) आविर्भूतस्वरूपः = आविर्भूतपरमार्थस्वरूपः (जीव एव तत्र विवक्षितः, न तु जीवत्वविशिष्टः, अतः जीवो न दहरः, किन्तु ब्रह्मैव) ।

## सूत्र- अन्यार्थश्च परामर्शः ।। २० ।।

पद०- अन्यार्थः, च परामर्शः ।

पदा०- परामर्शश्च = 'सम्प्रसादः' (छा० ८/३/४) इति जीवपरामर्शस्तु,

अन्यार्थः = परमात्मप्रतिपादनपरः ( न जीवप्रतिपादनपरः) ।

## सूत्र— अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

पद०— अल्पश्रुतेः, इति चेत्, तत्, उक्तम् ।

पदा०- अल्पश्रुतेः = 'दहरोऽस्मिन्नन्तराकाशः' इत्यल्पत्वश्रवणात् ( न दहरः परमात्मा, किन्तु जीव एव) इति चेत् तदुक्तम् = तत् = तत्र उक्तम् समाधानम् अर्भकौकस्त्वादित्यत्र ( अतः दहराकाशः परमात्मैव) ।

### अधिकरणसार

दहरः को वियज्जीवो ब्रह्म वाऽऽकाशशब्दतः ।
वियत्स्यादथवाऽल्पत्वश्रुतेर्जीवो भविष्यति ॥ १ ॥
बाह्याकाशोपमानेन द्युभूम्यादिसमाहितेः ।
आत्मापहतपाप्मत्वात्सेतुत्वाच्च परेश्वरः ॥ २ ॥

## ६ अनुकृत्यधिकरणम् सू० २२—२३

## सूत्र— अनुकृतेस्तस्य च ॥ २३ ॥

पद०— अनुकृतेः, तस्य, च ।

पदा०- अनुकृतेः = ['न तत्र सूर्यो भाति न चन्द्रतारकम्' (मु० ।२।२।१०) इत्यादिमन्त्रे प्रतीयमानं वस्तु न तेजोविशेषः, किन्तु ब्रह्मैव, कुतः] सर्वपदार्थानाम् तत्तेजोऽनुकरणात्, तस्य च = ब्रह्मणो-भासैव सर्वेषां भास्यत्वावगमात् ।

## सूत्र— अपि च स्मर्यते ॥ २३ ॥

पद०— अपि, च, स्मर्यते ।

पदा०- अपि च = किञ्च, स्मर्यते = इदं रूपं 'न तद् भासयते सूर्यो' (गी० १५/६) 'यदादित्यगतं तेजो' इत्यादिभगवद्गीतास्वपि ब्रह्मण एव स्मर्यते ।

अधिकरणसार

न तत्र सूर्यो भातीति तेजोऽन्तरमुतापि चित् ।
तेजोऽभिभावकत्वेन तेजोन्तरमिदं महत् ॥ १ ॥
चित्स्यात्सूर्याद्यभास्यत्वात् तादृक् तेजोऽप्रसिद्धितः ।
सर्वस्मात्पुरतो भानात्तद्भासा चान्यभासनात् ॥ २ ॥

## ७ प्रमिताधिकरणम् २४—२५

## सूत्र- शब्दादेव प्रमितः ॥ २४ ॥

पद०— शब्दाद्, एव, प्रमितः ।

पदा०- प्रमितः = 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः/ईशानो भूत-भव्यस्य' ( का० २/४/१२ ) इति प्रमितवाक्यप्रतिपाद्यः [जीवाभिन्नः परमात्मैव, कुतः ] शब्दादेव = श्रुतौ ईशानशब्द सत्त्वादेव ।

## सूत्र- हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

पद०— हृदि, अपेक्षया, तु, मनुष्याधिकारत्वात् ।

पदा०- मनुष्याधिकारत्वात् = शास्त्रस्य मनुष्याधिकारत्वात्, हृद्यपेक्षया = मनुष्याणां हृदयस्य अङ्गुष्ठमात्रत्वात् तदपेक्षया [परमात्मनोऽङ्गुष्ठमात्रत्वमुक्तम् ] ।

अधिकरणसार

अङ्गुष्ठमात्रो जीवः स्यादीशो वाऽल्पप्रमाणतः ।
देहमध्ये स्थितेश्चैव जीवो भवितुमर्हति ॥ १ ॥
भूतभव्येशता जीवे नास्त्यतोऽसाविहेश्वरः ।
स्थितिप्रमाणे ईशेऽपि स्तो हृद्यस्योपलब्धितः ॥ २ ॥

## ८ देवताधिकरणम् सू० २६—३३

### सूत्र- तदुपर्यपि बादरायणः सम्भवात् ॥ २६ ॥

पद०— तदुपरि, अपि, बादरायणः, सम्भवात् ।

पदा०- तदुपर्यपि = मनुष्यादुपरिष्टाद् ये देवादयस्तेषामपि, सम्भवात् = अर्थित्वसामर्थ्याद्यधिकारकारणसम्भवात् [ब्रह्मविद्यायामधिकारोऽस्तीति बादरायणः (आचार्यो मनुते) ।

### सूत्र- विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्॥२७॥

पद०— विरोधः, कर्मणि, इति, चेत्, न, अनेकप्रतिपत्तेः, दर्शनात् ।

पदा०- कर्मणि विरोधः = [इन्द्रादीनां विग्रहवत्त्वे एकस्य शरीरस्याऽनेकत्र कर्मणि युगपत्सन्निधानासम्भवात्] कर्मणि विरोधः प्रसज्येत, इति चेत्, न, अनेकप्रतिपत्तेः = एकस्याप्यनेकशरी-

राणां युगपत् प्राप्तेः, दर्शनात् = 'स एकधा भवति त्रिधा भवति' इत्यादिश्रुतौ दर्शनात् (अथवा) अनेकप्रतिपत्तेः = अनेकत्र कर्मणि एकस्याऽङ्गभावस्य दर्शनात् (इन्द्रादीनामपि अनेकत्र हविर्ग्रहणमुपपद्यते) ।

**सूत्र-शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्॥२८॥**

पद०- शब्दे, इति, चेत्, न, अतः, प्रभवात् प्रत्यक्षानुमानाभ्याम् ।

पदा०- शब्दे = वेदवाक्ये [विरोधः] इति चेत्, न, अतः = वैदिक शब्दाद् (एव) प्रभवात् = देवादिजगत उत्पत्तेः, (तच्च) प्रत्यक्षानुमानाभ्याम् = 'एत इति वै प्रजापतिर्देवानसृजत,' 'वेद शब्देभ्य एवादौ' (मनु० १/२१) इत्यादिश्रुतिस्मृतिभ्याम् (अवगम्यते) ।

**सूत्र- अत एव च नित्यत्वम् ॥ २९ ॥**

पद०- अतः, एव, च, नित्यत्वम् ।

पदा०-अत एव च = देवादेर्जगतो वेदशब्दप्रभवत्वादेव, नित्यत्वम् = अजन्यत्वम् [वेदस्य प्रत्येतव्यम्] ।

**सूत्र- समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनाद् स्मृतेश्च ॥ ३० ॥**

पद०- समाननामरूपत्वात्, च आवृत्तौ, अपि अविरोधः, दर्शनात्, स्मृतेः, च ।

पदा०-आवृत्तावपि = सृष्टिप्रलययोरावृत्तावपि, समाननामरूपत्वाच्च

= उत्तरकल्पप्रपञ्चस्य पूर्वकल्पसमाननामरूपत्वादेव, अविरोधः = शब्दार्थसम्बन्धानित्यत्वरूपविरोधो नास्ति, (प्रपञ्चस्य (समाननामरूपत्वं च ) दर्शनात् = 'धाता यथापूर्वमकल्पयत्' (ऋ० सं० १०/१९०/३) इत्यादिश्रुतेः स्मृतेश्च = यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु इत्यादिस्मृतेश्च (अवगम्यते) ।

**सूत्र- मध्वादिष्वसम्भवादनधिकारं जैमिनिः ।। ३१ ।।**

पद०- मध्वादिषु, असम्भवात्, अनधिकारम्, जैमिनिः ।

पदा०—मध्वादिषु = 'असौ वा आदित्यो देवमधु' (छा० ३/१/१), 'आदित्यो ब्रह्मेत्यादेशः' (छा० ३/१९/१) इत्यादिषु मधुब्रह्माध्यासेन आदित्योपासनेषु मनुष्याधिकारकेषु, असम्भवाद् = तेषामेवादित्यादीनामधिकारासम्भवात् अनधिकारम् = ब्रह्मविद्यायां देवादीनामनधिकारं जैमिनिः [आचार्यो मन्यते] ।

**सूत्र- ज्योतिषि भावाच्च ।। ३२ ।।**

पद०— ज्योतिषि भावात् च ।

पदा०- ज्योतिषि = लौकिकयोः आदित्यशब्दप्रत्यययोः ज्योतिर्मण्डले, भावाच्च = प्रयोगात् [तेषाम् अचेतनत्वात् तदतिरिक्तस्य चेतनस्य विग्रहादिमतः प्रत्यक्षाद्यगोचरत्वात् तद्विग्रहप्रतिपादकानां मन्त्राणाम् अन्यपरत्वेन स्वार्थे प्रामाण्याभावात् न

देवानां विद्याधिकारः ] ।

## सूत्र— भावं तु बादरायणोऽस्ति हि ॥३३॥

पद०— भावम्, तु, बादरायणः, अस्ति, हि ।

पदा०- बादरायणस्तु (आचार्यः) भावम् = देवादीनामपि निर्गुण-ब्रह्मविद्यायामधिकारं [मनुते] हि = यतः, अस्ति = देवताविग्रह प्रतिपादकमन्त्रादीनां प्रमाणान्तराविरोधेन स्वार्थे प्रामाण्यात् तेषामपि अर्थित्वाद्यधिकारकारणमस्ति ।

अधिकरणसार

नाधिक्रियन्ते विद्यायाम् देवाः किं वाऽधिकारिणः ।
विदेहत्वेन सामर्थ्यहानेनैषामधिक्रिया ॥ १ ॥
अविरुद्धार्थवादादिमन्त्रादेर्देहसत्त्वतः ।
अर्थित्वादेश्च सौलभ्याद् देवाद्या अधिकारिणः ॥ २ ॥

## ९— अपशूद्राधिकरणम् सू० ३४—३८

## सूत्र- शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥ ३४ ॥

पद० शुक्, अस्य, तदनादरश्रवणात्, तदाद्रवणात्, सूच्यते हि ।

पदा०- अस्य = जानश्रुतेः, तदनादरश्रवणात् = हंसस्यानादरश्रवणात्

[या]शुक् = शोकः [उत्पन्ना, सा] सूच्यते हि = शूद्रशब्देन सूच्यते, तदाद्रवणात् = जानश्रुतेः रैक्वं प्रति शुचा गमनात् [जानश्रुतिः शूद्र इत्युच्यते] ।

**सूत्र-क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥३५**

पद०— क्षत्रियत्वगतेः, च, उत्तरत्र, चैत्ररथेन, लिङ्गात् ।

पदा०- क्षत्रियत्वगतेः = क्षत्रियत्वज्ञानाच्च (जानश्रुतिर्न मुख्यशूद्रः, तत्कस्मात्) उत्तरत्र = संवर्गविद्यावाक्यशेषे, चैत्ररथेन = चित्ररथवंशीतेन अभिप्रतारिणा क्षत्रियेण, लिङ्गात् = समभिव्याहारात्मकलिङ्गात् ।

**सूत्र- संस्कारपरामर्शात्तदभावाभिलापाच्च ॥३६॥**

पद०— संस्कारपरामर्शात्, तदभावाभिलापात् च ।

पदा०- संस्कारपरामर्शात् = 'तं होपनिन्ये' [श०ब्रा० ११/५/३/१३] 'अधीहि भगव इति होपससाद' [छा० ७/१/१] इत्यादिविद्याप्रदेशेषु उपनयनादिसंस्कारपरामर्शात्, तदभावाभिलापाच्च = 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति' [मनु० १०/१२/६] इत्यादिना शूद्रस्य उपनयनादिसंस्काराभावाभिधानाच्च [न

विद्यायां शूद्रस्याऽधिकारः] ।

## सूत्र—तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

पद०— तदभावनिर्धारणे, च प्रवृत्तेः ।

पदा०- तदभावनिर्धारणे = जाबालस्य सत्यवचनेन शूद्रत्वाभाव— निश्चये सत्येव, प्रवृत्तेः = गौतमस्य विद्योपदेशे प्रवृत्तिदर्शनाद्, च = अपि [ज्ञायते न शूद्रस्याधिकार इति] ।

## सूत्र—श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥३८॥

पद०— श्रवणाध्ययनार्थप्रतिषेधात्, स्मृतेः, च ।

पदा०- स्मृतेः = 'अथास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' 'तस्मात् शूद्रसमीपे नाध्येतव्यम्' 'न शूद्राय मतिं दद्यात्', 'द्विजातीनामध्ययनमिज्यादानम्' इत्यादिस्मृतितः, श्रवणा— ध्ययनार्थप्रतिषेधात् = वेदाश्रवणस्य वेदाध्ययनस्य वेदार्थज्ञाना- नुष्ठानयोश्च निषेधात्, च = अपि [शूद्रस्य न विद्यायाम— धिकारः] ।

### अधिकरणसार

शूद्रोऽधिक्रियते वेदविद्यायामथवा नहि ।
अत्रैवर्णिकदेवाद्या इव शूद्रोऽधिकारवान् ॥ १ ॥

देवाः स्वयंभातवेदाः शूद्रोऽध्ययनवर्जनात् ।
नाधिकारी श्रुतौ स्मार्त्ते त्वधिकारो न बार्यते ॥ २ ॥

## १०— कम्पनाधिकरणम् सू० ३९

### सूत्र— कम्पनात् ॥ ३९ ॥

पदा०-कम्पनात् = ['यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्' (का० २/६/२) इत्यादिश्रुतौ प्रतीयमानः प्राणः परमात्मैव, कुतः] सर्वस्य सवायुमस्थ जगतो जीवनादिचेष्टाहेतुत्वात् ।

अधिकरणसार

जगत्कम्पनकृत्प्राणोऽशनिर्वायुरुतेश्वरः ।
अशनिर्भयहेतुत्वाद्वायुर्वा देहचालनात् ॥ १ ॥
वेदनादमृतत्वोक्तेरीशोऽन्तर्यामिरूपतः ।
भयहेतुश्चालनन्तु सर्वशक्तियुतत्वतः ॥ २ ॥

## ११— ज्योतिरधिकरणम् सू०-४०

### सूत्र— ज्योतिर्दर्शनात् ॥ ४० ॥

पद०— ज्योतिः, दर्शनात् ।

पदा०-ज्योतिः = "एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं

ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते (छा० ८/१२/३) इत्यत्र ज्योतिःशब्दवाच्यं [ब्रह्मैव, कुतः], दर्शनात् = 'य आत्माऽपहतपाप्मा' (छा० ८/७/१) इत्युपक्रमालोचनया ब्रह्मण एव प्रतिपाद्यतयाऽनुवृत्तिदर्शनात् ।

अधिकरणसार

परं ज्योतिस्तु सूर्यस्य मण्डलं ब्रह्म वा भवेत् ।
समुत्थायोपसम्पद्येत्युक्त्या स्याद्रविमण्डलम् ॥ १ ॥
समुत्थानं त्वम्पदार्थशुद्धिर्वाक्यार्थबोधनम् ।
सम्पत्तिरुत्तमत्वोक्तेर्ब्रह्म स्यादक्षसाक्षितः ॥ २ ॥

## १२– अर्थान्तरत्वादिव्यपदेशाधिकरणम् सू०–४१

## सूत्र– आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

पद०– आकाशः, अर्थान्तरत्वादिव्यपदेशात् ।

पदा०– आकाशः = 'आकाशो वै नाम नामरूपयोर्निर्वहिता (छा० ८/१४/१) इत्यादिश्रुतौ आकाशशब्दितः [परमात्मैव, कुतः] अर्थान्तरत्वादिव्यपदेशात् = 'ते यदन्तरा' (छा० ८/१४/१) इत्याकाशस्य नामरूपाभ्यामर्थान्तरत्वेन 'तद् ब्रह्म तदमृतं स

आत्मा' (छा० ८/१४/१) इति ब्रह्मत्वादिना च व्यपदेशात् ।

अधिकरणसार

वियद्वा ब्रह्म वाऽऽकाशो वै नामेति श्रुतं वियत् ।
अवकाशप्रदानेन सर्वनिर्वाहकत्वतः ॥ १ ॥
निर्वोढ़त्वं नियन्तृत्वं चैतन्यस्यैव तत्त्वतः ।
ब्रह्म स्याद्वाक्यशेषे च ब्रह्मात्मेत्यादिशब्दतः ॥ २ ॥

## १३- सुषुप्त्युत्क्रान्त्यधिकरणम् सू० ४२–४३

### सूत्र—सुषुप्त्युत्क्रान्त्योर्भेदेन ॥४२॥

पद०– सुषुप्त्युत्क्रान्त्योः, भेदेन ।

पदा०- सुषुप्त्युत्क्रान्त्योर्भेदेन = [योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः'] बृ० ४/३/७] इत्यादिश्रुतौ प्रतिपाद्यमानः पुरुषः परमात्मैव, कुतः] 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' [बृ०-४/३/२१] 'प्राज्ञेनात्मनान्वारूढः उत्सर्जन् याति' इति सुषुप्त्युत्क्रान्त्योरवस्थयोः शारीराद् भेदेन परमात्मनः प्राज्ञशब्देन व्यपदेशात् ।

## सूत्र— पत्यादिशब्देभ्यः ।। ४३ ।।

पदा०- पत्यादिशब्देभ्यः = 'य ऽयं विज्ञानमयः' [बृ० ४/३/७] इत्यु-क्तवाक्यगतेभ्यः 'सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इति पत्यादिशब्देभ्योऽसंसारित्वप्रतिपादकेभ्यः 'स न साधुना कर्मणा भूयान्' इत्यादिशब्देभ्यः संसारित्वनिषेधकेभ्यश्च [गम्यते यदुक्तवाक्यम् असंसारि ब्रह्मप्रतिपादकमेवेति] ।

अधिकरणसार

स्याद्विज्ञानमयो जीवो ब्रह्म वा जीव इष्यते ।
आदिमध्यावसानेषु संसारप्रतिपादनात् ।। १ ।।
विविच्य लोकसंसिद्धं जीवं प्राणाद्युपाधितः ।
ब्रह्मत्वमन्यतोऽप्राप्तं बोध्यते ब्रह्म नेतरत् ।। २ ।।

।। तृतीयपादः समाप्तः ।।

# प्रथमाध्याये चतुर्थः पादः

(अत्र प्रधानविषयत्वेन संदिह्यमानानामव्यक्ताजादिपदानां चिन्तनम्)

## १—आनुमानिकाधिकरणम् सू० १—७

### सूत्र—आनुमानिकमप्येकेषामिति चेन्न शरीर-रूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

पद०—आनुमानिकम्, अपि, एकेषाम्, इति, चेत्, न, शरीररूपक-विन्यस्तगृहीतेः, दर्शयति, च ।

पदा०—एकेषाम् = केषांचित् शाखिनाम् ('महतः परमव्यक्तमव्यक्तात् पुरुषः परः' (का० १/३/११) इत्यादौ आनुमानिकमपि = प्रधान-मपि ( पठ्यते ) इति चेत् न, शरीररूपकविन्यस्त गृहीतेः = 'शरीरं रथमेव तु' इत्यस्मिन् पूर्ववाक्ये शरीरस्य रथरूप-केण कल्पितस्य ग्रहणात्, दर्शयति च = पूर्वापरसन्दर्भं आलो-च्यमान औचित्येन प्रकृतशरीरमेव अव्यक्तग्राह्यं दर्शयति ।

### सूत्र—सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

पद०—सूक्ष्मम्, तु, तदर्हत्वात् ।

पदा०-सूक्ष्मं तु = स्थूलशरीरारम्भकं भूतसूक्ष्मं (अव्यक्तपदेन गृह्यते, कुतः) तदर्हत्वात् = अव्यक्तशब्दार्हत्वात् ।

## सूत्र-तदधीनत्वादर्थवत् ॥३॥

पद०-तदधीनत्वाद्, अर्थवत् ।

पदा०-तदधीनत्वाद् = ईश्वराधीनत्वात् [अव्यक्तस्य न स्वतन्त्रता] अर्थवत् = ईश्वरसहकारित्वात् अव्यक्तं प्रयोजनवत् ।

## सूत्र-ज्ञेयत्वावचनाच्च ॥४॥

पद०-ज्ञेयत्वावचनात्, च ।

पदा०-ज्ञेयत्वावचनात् = अव्यक्तस्य ज्ञेयत्वानभिधानाद्, च = अपि (न अत्र अव्यक्तं प्रधानम्) ।

## सूत्र-वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥५॥

पद०-वदति, इति, चेत् न, प्राज्ञः, हि, प्रकरणात् ।

पदा०-वदति = 'महतः परं ध्रुवं निचाय्य'[का० २/३/१५]इत्युत्तरं वाक्यं प्रधानं ज्ञेयत्वेन वदति,इति,चेत् न, प्राज्ञो हि = परमात्मैव निचाय्यत्वेनोक्तः (कुतः) प्रकरणात् = 'पुरुषान्न परं किञ्चित्' (का० १/३/११) इत्यात्मप्रकरणात् ।

**सूत्र- त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥**

पद०— त्रयाणाम्, एव, च, एवम्, उपन्यासः, प्रश्नः, च ।

पदा०- एवम् = पूर्वोत्तरवाक्यपर्यालोचनया, त्रयाणामेव = अग्नि-जीव-परमात्मनामेव, उपन्यासः = वक्तव्यत्वेनोपन्यासः, प्रश्नश्च = अग्निजीवपरमात्मविषयक एव प्रश्नोऽपि [ दृश्यते, अतः न अव्यक्तं प्रधानम् ] ।

**सूत्र- महद्वच्च ॥ ७ ॥**

पद०— महद्वत्, च ।

पदा०- महद्वच्च = यथा 'बुद्धेरात्मा महान् परः' [क० १/३/१०] इत्यत्र महच्छब्दो न साङ्ख्याभिमतद्वितीयतत्त्ववाची, एवमेव वैदिकाव्यक्तशब्दोऽपि न प्रधानवाचकः ।

**अधिकरणसार**

महतः परमव्यक्तं प्रधानमथवा वपुः ।
प्रधानं सांख्यशास्त्रोक्ततत्त्वानां प्रत्यभिज्ञया ॥ १ ॥
श्रुतार्थप्रत्यभिज्ञानात् परिशेषाच्च तद्वपुः ।
सूक्ष्मत्वात्कारणावस्थमव्यक्ताख्यं तदर्हति ॥ २ ॥

## २—चमसाधिकरणम् सू० ८—१०

### सूत्र- चमसवदविशेषात् ॥ ८ ॥

पद०— चमसवत्, अविशेषात् ।

पदा०- चमसवत् = यथा 'अर्वाग्बिलश्चमसः' (बृ० २/२/३) इत्यादौ अयं चमस इत्यवधारणं न भवति, कथंचिदर्वाग्बिलत्वादेरन्यत्राप्यविशेषात्, एवम् अविशेषात् = 'अजामेकां लोहितशुक्लकृष्णाम्' (श्वे० ४/५) इति मन्त्रेऽपि अजात्वादेरविशेषान्न प्रधाननिर्णयः, (अतः प्रधानमशब्दम् ) ।

### सूत्र—ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥९॥

पद०—ज्योतिरुपक्रमा, तु, तथा, हि, अधीयते, एके ।

पदा०- ज्योतिरुपक्रमा = तेज उपक्रमे यस्यास्तेजोऽबन्नलक्षणायः सा, तु = एव [अत्र निर्धारणीया, न प्रधानम्, कुतः] हि = यस्मात्, एके = छन्दोगाः, तथा = तेजोऽबन्नात्मिकायाः प्रकृतेः रोहितादिरूपताम्, अधीयते = समामनन्ति ।

### सूत्र-कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥

पद०— कल्पनोपदेशात्, च, मध्वादिवात्, अविरोधः ।

पदा०—कल्पनोपदेशाच्च = तेजोबन्नात्मकप्रकृतेः साम्यद्योतनार्थं कल्पनयाऽजात्वोपदेशात मध्वादिवत् = यथा मधुभिन्नादित्यस्य मधुत्वोपदेशः तद्वत् [अजाभिन्नायाः प्रकृतेरजात्वोपदेशे] अविरोधः = न कश्चिद्विरोधः [तस्मादशब्दं प्रधानमिति सिद्धम्] ।

अधिकरणसार

अजा हि सांख्यप्रकृतिस्तेजोऽबन्नात्मिकाऽथवा ।
रजआदौ लोहितादिलक्ष्येऽसौ सांख्यशास्त्रगा ॥१॥
लोहितादिप्रत्यभिज्ञा तेजोऽबन्नादिलक्षणाम् ।
प्रकृतिं गमयेच्छ्रौतीमजाक्लृप्तिर्मधुत्ववत् ॥२॥

## ३-संख्योपसंग्रहाधिकरणम् सू० ११-१३

## सूत्र—न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥११॥

पद०—न, संख्योपसंग्रहात्, अपि, नानाभावात्, अतिरेकात्, च ।

पदा०—संख्योपसंग्रहादपि = 'यस्मिन् पञ्च पञ्चजना आकाशश्च-प्रतिष्ठितः' [बृ०४/४/१७] इत्यस्मिन मन्त्रे श्रूयमाणया संख्यया पञ्चविंशतिसंख्यानामुपसङ्ग्रहादपि, न = न प्रधानस्य शब्दवत्त्वम्

[कुतः] नानाभावात् = तेषां पञ्चनां पञ्चकानामेकपञ्चक-पर्याप्तान्यपञ्चकव्यावृत्तधर्मवत्त्वाभावेन नानात्वात्, अति-रेकाच्च = अस्मिन् मन्त्रे श्रूयमाणयोरात्माकाशयोः पञ्चविं-शतिसंख्यातिरिक्तत्वात् [तस्मान्नात्र प्रधानादितत्त्वग्रहण-मुचितम्] ।

## सूत्र-प्राणादयो वाक्यशेषात् ॥ १२ ॥

पद०—प्राणादयः, वाक्यशेषात् ।

पदा०—प्राणादयः = प्राणचक्षुःश्रोत्रान्नमनांसि [पञ्चजनशब्देनोच्य-न्ते कस्माद्] वाक्यशेषात् = 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' [बृ० ४/४/१७] इत्यादिवाक्य शेषस्थत्वात् ।

## सूत्र—ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

पद०—ज्योतिषा, एकेषाम्, असति, अन्ने ।

पदा०—एकेषाम् = काण्वानाम्, अन्ने असति, ज्योतिषा = 'तद्देवा ज्योतिषां ज्योतिः' [बृ० ४/४/१८] इत्यादि पूर्ववाक्यस्थ-ज्योतिषा (पञ्चत्वं पूरणीयम्) ।

अधिकरणसार

पञ्च पञ्चजनाः सांख्यतत्त्वान्याहो श्रुतीरिताः ।
प्राणाद्याः सांख्यतत्त्वानि पञ्चविंशतिभासनात् ॥ १ ॥
न पञ्चविंशतेर्भानमात्माकाशातिरेकतः ।
संज्ञा पञ्चजनेत्येषा प्राणाद्याः संज्ञिनः श्रुताः ॥ २ ॥

## ४— कारणत्वाधिकरणम् सू० १४—१५

### सूत्र—कारणत्वे न चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥१४॥

पद०— कारणत्वे, न, च, आकाशादिषु, यथाव्यपदिष्टोक्तेः ।

पदा०- कारणत्वे च = ब्रह्मणो जगत्कारणत्वे तु, न = विरोधो नास्ति (कुतः) आकाशादिषु = सृज्यमानेषु आकाशादिपदार्थेषु, यथाव्यपदिष्टोक्तेः यथाभूत ईश्वरः एकत्र कारणत्वेनोपदिष्टः, तथाभूतस्यैवाऽपरत्र कथानात् ।

### सूत्र— समाकर्षात् ॥ १५ ॥

पदा० समाकर्षात् = 'असदेवेदमग्र आसीत्' [छा० ३/१९/१]- इत्यत्र अनभिव्यक्तनामरूपवाचिनाऽसच्छब्देन सत एव समाकर्षात् [न असतः कारणत्वशङ्कावकाशः] ।

अधिकरणसार

समन्वयो जगद्योनौ न युक्तो युज्यतेऽथवा ।
न युक्तो वेदवाक्येषु परस्परविरोधतः ॥ १ ॥
सर्गक्रमविवादेऽपि नासौ स्रष्टरि विद्यते ।
अव्याकृतमसत्प्रोक्तं युक्तोऽसौ कारणे ततः ॥ २ ॥

## ५- बालाक्यधिकरणम् सू० १६—१८

### सूत्र—जगद्वाचित्वात् ॥ १६ ॥

पदा०- जगद्वाचित्वात् = 'यो ह वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः' [कौ० ब्रा० ४/१८] इति श्रुतौ कर्मशब्दस्य जगद्वाचित्वात् [कर्ता परमात्मैव] ।

### सूत्र-जीवमुख्यप्राणलिङ्गान्नेति चेत्तद् व्याख्यातम्॥१७॥

पद०— जीवमुख्यप्राणलिङ्गात्, न, इति, चेत्, ततः व्याख्यातम् ।

पदा०- जीवमुख्यप्राणलिङ्गात् = श्रुतौ शारीरस्य प्राणवायोश्च लिङ्ग-सद्भावात्, न तस्या ब्रह्मपरत्वम्, इति, चेत् तत् = तस्या ब्रह्मपरत्वम्, व्याख्यातम् = प्रतर्दनाधिकरणे प्रतिपादितम् ।

### सूत्र- अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

पद०— अन्यार्थम्, तु, जैमिनिः, प्रश्नव्याख्यानाभ्याम्, अपि, च, एवम्, एके ।

पदा०- जैमिनिस्तु = [आचार्यः अस्मिन् प्रकरणे जीवपरामर्शम्] अन्यार्थम् = ब्रह्मप्रतिपत्त्यर्थम् (मन्यते, कुतः) प्रश्नव्याख्यानाभ्याम् = 'क्वैष एतद् बालाके ! पुरुषोऽशयिष्ट क्व वा एतदभूत्' (कौ०ब्रा० ४/१९) इति, 'यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति' इति च प्रश्नोत्तराभ्याम्, अपि च = किञ्च, एके = वाजसनेयिनः, एवम् = 'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागात्' इति, 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' (बृ०२/१/१७) इति च प्रश्नोत्तराभ्याम् (स्पष्टं विज्ञानमयातिरिक्तं परमात्मानम् आमनन्ति) ।

## अधिकरणसार

पुरुषाणान्तु कः कर्ता प्राणजीवपरात्मसु ।
कर्मेति चलने प्राणो जीवोऽपूर्वे विवक्षिते ॥ १ ॥
जगद्वाची कर्मशब्दः पुंमात्रविनिवृत्तये ।
तत्कर्त्ता परमात्मैव न मृषावादिता यतः ॥ २ ॥

## ६— वाक्यान्वयाधिकरणम् सू० १९—२२

### सूत्र— वाक्यान्वयात् ॥१९॥

पदा०- वाक्यान्वयात् = [‘आत्मा वा अरे द्रष्टव्यः श्रोतव्यः’ (बृ० ४/५/६) इत्यत्र द्रष्टव्यत्वादिरूपेणोपदिष्टः आत्मा परमात्मैव, कुतः] उपक्रमादिपर्यालोचनया वाक्यस्य ब्रह्मण्येवाऽन्वयात् ।

### सूत्र- प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥२०॥

पद०- प्रतिज्ञासिद्धेः, लिङ्गम्, आश्मरथ्यः ।

पदा०- प्रतिज्ञासिद्धेः = एकविज्ञानेन सर्वविज्ञानं भवतीति प्रतिज्ञायाः सिद्धेः [अभेदांशमादाय जीवोपक्रमणम् लिङ्गम्, आश्मरथ्यः [आचार्यः मनुते ] ।

समाधानान्तर—

### सूत्र—उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥२१॥

पद०—उत्क्रमिष्यतः, एवंभावात्, इति औडुलोमिः ।

पदा०- उत्क्रमिष्यतः = ब्रह्मात्मत्वसाक्षात्कारेण कार्यकरणसङ्घातादुत्क्रमिष्यतः, एवंभावात् = परमात्मना एकीभावात् [भविष्यदभेदमादाय जीवोपक्रमः] इति, औडुलोमिः (आचार्यो मन्यते)।

**सूत्र—अवस्थितेरिति काशकृत्स्नः ॥२२॥**

पद०— अवस्थितेः, इति, काशकृत्स्नः ।

पदा०-अवस्थितेः = ब्रह्मण एवाऽविद्याकल्पितभेदेन जीवरूपेणाऽवस्थानात् [जीवोपक्रमः] इति, काशकृत्स्नः [आचार्यो मन्यते] ।

अधिकरणसार

आत्मा द्रष्टव्य इत्युक्तः संसारी वा परेश्वरः ।
संसारी पतिजायादिभोगप्रीत्याऽस्य सूचनात् ॥ १ ॥
अमृतत्वमुपक्रम्य तदन्तेऽप्युपसंहृतम् ।
संसारिणमनूद्याऽतः परेशत्वं विधीयते ॥ २ ॥

## ७—प्रकृत्यधिकरणम् सू० २३- २७

**सूत्र—प्रकृतिश्च प्रतिज्ञा दृष्टान्तानुपरोधात् ॥२३॥**

पद०— प्रकृतिः, च प्रतिज्ञादृष्टान्तानुपरोधात् ।

पदा०-प्रकृतिश्च = उपादानकारणम्, निमित्तकारणमपि [ब्रह्म, कुतः] प्रतिज्ञादृष्टान्तानुपरोधात् = 'येनाश्रुतं श्रुतं भवति' (छा० ६/१/३) इत्यादिरेकविज्ञानेन सर्वविज्ञान प्रतिज्ञा, 'यथा सोम्यैकेन मृत्पिण्डेन सर्वम् मृण्मयं विज्ञातम्' (छा० ६/१/४)

इत्यादिदृष्टान्तश्च, तयोः सामञ्जस्यात् ।

सूत्र—अभिध्योपदेशाच्च ॥२४॥

पद०— अभिध्योपदेशात्, च ।

पदा०- अभिध्योपदेशाच्च = 'सोऽकामयत' इत्यात्मनो ध्यानोपदेशात् कर्तृत्वम्, 'बहु स्याम्' इति ध्यानोपदेशात् प्रकृतित्वम् ।

प्रकृतित्व में हेत्वन्तर—

सूत्र— साक्षाच्चोभयाम्नानात ॥ २५ ॥

पद०- साक्षात, च, उभयाम्नानात् ।

पदा०- साक्षाच्चोभयाम्नानात् = 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' (छा० १/९/१) इत्याकाशशब्देन साक्षादेव ब्रह्म गृहीत्वा जगदुत्पत्तिप्रलययोराम्नानात् (ब्रह्म निमित्तप्रकृती) ।

सूत्र—आत्मकृतेः परिणामात् ॥ २६ ॥

पद०— आत्मकृतेः, परिणामात् ।

पदा०- 'तदात्मानं स्वयमकुरूत' (तै०२/७) इति आत्मानमिति द्वितीययाकृति विषयत्वं 'स्वयमकुरुत' इत्यनेन कृतिमत्वं चाम्नायते ।

तथा च ब्रह्मण उपादानं निमित्तत्वं चाविरुद्धम् । कुतः ? आत्मकृतेः = आत्मसंबन्धिनी कृतिरात्मकृतिः, ततो हेतोः । ननु आत्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं कृतिकर्मत्वमत आह— परिणामात = परिणामो विवर्तः, सिद्धस्यापि विवर्तात्मन साध्यत्वात्कर्मत्वोपपत्तिरित्यर्थः ।

## सूत्र— योनिश्च हि, गीयते ॥ २७ ॥

पद०— योनिः, च, हि, गीयते ।

पदा०- 'यद् भूतयोनिं परिपश्यन्ति' (मु० १/१/६) इति प्रकृति-वाचकयोनिशब्देन आत्मा हि यस्माद् गीयते, तस्मात् प्रकृति-र्ब्रह्मेत्यतो ब्रह्मणः प्रकृतित्वं कर्तृत्वं च सिद्धम् ।

अधिकरणसार

निमित्तमेव ब्रह्म स्यादुपादानं च वीक्षणात् ।
कुलालवन्निमितं तन्नोपादानं मृदादिवत् ॥ १ ॥
बहु स्यामित्युपादानभावोऽपि श्रुत ईक्षितुः ।
एकबुद्ध्या सर्वधीश्च तस्माद् ब्रह्मोभयात्मकम् ॥२ ॥

## ८— सर्वव्याख्यानाधिकरणम् सू० २८

सूत्र—एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

पदा०- अत्र पूर्वपक्षे ब्रह्मण्येव वेदान्तसमन्वयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र वेदान्ता विषयः । तत्र किं ब्रह्मण इव परमाणुशून्यादीनामपि क्वचिज्जगत्कारणत्वं श्रुतमस्ति, अथवा सर्वत्र ब्रह्मण एव सर्वकारणत्वं प्रतिनियत-मिति संशये, 'अण्व्य इवेमा धानाः' [छा० ६/१२/१] 'असदेवेदमग्र आसीत्' [छा० ६/२/१] 'स्वभावमेके' इत्यादिषु अण्वादीनामपि कारणत्वं श्रुतमिति पूर्वपक्षः । सिद्धान्तस्तु— एतेन प्रधानवादनिराकरणे ये हेतवः अशब्दत्वाचेतनत्वैक-विज्ञानप्रतिज्ञानुपपत्त्यादयः तेषामण्वादिपक्षेऽपि साम्येन, सर्वेऽण्वादिकारणवादा निराकृतत्वेन व्याख्याताः । न चासदित्यादिशब्दविरोधः । असच्छब्दस्य अनभिव्यक्तनाम-रूपपरत्वेनाविरोधात् । सूक्ष्मत्वाच्चात्मन्यणुशब्दो गौणः । स्वभाववादस्तु पूर्वपक्षत्वेनोपन्यस्तः । व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्त्यर्थः । तस्माज्जगत्कारणे सर्वज्ञे जिज्ञास्ये ब्रह्मणि वेदान्तानाम् समन्वयो नान्यत्रेति सिद्धम् ।

अधिकरणसारः

अण्वादेरपि हेतुत्वं श्रुतं ब्रह्मण एव वा ।
वटधानादिदृष्टान्तादण्वादेरपि तच्छ्रुतम् ॥ १ ॥
शून्याण्वादिष्वेकबुद्ध्या सर्वबुद्धिर्न युज्यते ।
स्युर्ब्रह्मण्यपि धानाद्यास्ततो ब्रह्मैव कारणम् ॥ २ ॥

"इति प्रथमाध्यायस्य चतुर्थः पादः"

॥ समाप्तश्च प्रथमोऽध्यायः ॥

# ब्रह्मसूत्र – द्वितीयाध्याय
# प्रथमपादः

## १—स्मृत्यधिकरणम् सू०-१-२

सू०- स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ।। १ ।।

पद०— स्मृत्यनवकाशदोषप्रसङ्गः, इति, चेत्, न, अन्यस्मृत्यनवकाशदोषप्रसङ्गात्

पदा०- स्मृत्यनवकाशदोषप्रसङ्ग = महर्षिप्रणीतप्रधानकारणवादिस्मृतीनामनवकाशरूपदोषप्रसङ्गात् समन्वयो विरुध्यते, इतिचेत् = इति पूर्वपक्षिणा यदुक्तं तद् । न = समन्वयो न विरुध्यते, [कुतः] अन्यस्मृत्यनवकाशदोषप्रसङ्गात् = [चेतनं प्रकृत्य 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इत्यादिकानाम्] चेतनकारणत्ववादिनीनामन्यासां स्मृतीनामनवकाशदोषः प्रसज्येत । अतः स्मृतिद्वयविरोधे श्रुत्यविरुद्धा स्मृतिः प्रमाण–

मित्यप्रमाणसांख्यस्मृत्या समन्वयो न विरुध्यत इत्यर्थः ।

**सू०— इतरेषां चानुपलब्धेः ॥ २ ॥**

पद०— इतरेषाम्, च अनुपलब्धेः ।

पदा०- इतरेषाम = सांख्यस्मृतिप्रसिद्धमहदादितत्त्वानां लोके वेदे चानुपलब्धेः = अप्रसिद्धत्वात्, सांख्यस्मृतेरप्रामाण्यन्न दोषकरम् ।

**अधिकरणसार**

सांख्यस्मृत्यास्ति संकोचो न वा वेदसमन्वये ।
धर्मे वेदः सावकाशः संकोचोऽनवकाशया ॥ १ ॥
प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिः स्मृतिः ।
अमूला कापिली बाध्या न संकोचोऽनय ततः ॥ २ ॥

## २ योगप्रत्युक्त्यधिकरणम् सू० ३

**सू०- एतेन योगः प्रत्युक्तः ॥ ३ ॥**

पद०— एतेन, योगः, प्रत्युक्तः ।

पदा०- एतेन = सांख्यस्मृतिप्रत्याख्यानेन, योगः = योगस्मृतिरपि प्रत्युक्तः = प्रत्याख्याता द्रष्टव्या । श्रुत्यविरुद्धाष्टाङ्गयोगे

तात्पर्यवत्त्वेन प्रामाण्येऽपि तद्विरुद्धप्रधाने तात्पर्याभावाद-प्रामाण्यमिति भावः ।

अधिकरणसार

योगस्मृत्याऽस्ति संकोचो न वा योगो हि वैदिकः ।
तत्त्वज्ञानोपयुक्तश्च ततः संकुच्यते तया ।। १ ।।
प्रमापि योगे तात्पर्यादतात्पर्यान्न सा प्रमा ।
अवैदिके प्रधानादावसंकोचस्तयाऽप्यतः ।। २ ।।

## ३- विलक्षणत्वाधिकरणम् सू० ४-११

## सू०-न विलक्षणत्वादस्य तथात्वं च शब्दात् ।।४।।

पद०- न, विलक्षणत्वात्, अस्य, तथात्वम्, च शब्दात् ।

पदा०-न = नेदं जगद् चेतनप्रकृतिकम् [कुतः] अस्य = अचेतनस्य जगतः, विलक्षणत्वात् = चेतनपरमात्मनः भिन्नस्वभावत्वात्, [यद् यद्विलक्षणं न तत्तत्प्रकृतिकम्, यथा तन्तुविलक्षणो घटो न तन्तुप्रकृतिक- इति, ननु ब्रह्मजगतोर्वैलक्षण्यं कुतः], तथात्वञ्च = उभयोर्वैलक्षण्यञ्च, शब्दात्, = 'विज्ञानंचाविज्ञानं चाभवत्' इत्यादिश्रुतितोऽवगतमित्यर्थः ।

**सू०-अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥५॥**

पद०- अभिमानिव्यपदेशः, तु, विशेषानुगतिभ्याम् ।

परा०- सूत्रे तुशब्द उक्तशङ्कानिरासार्थकः । अभिमानिव्यपदेशः = ['ते हेमे प्राणा अहंश्रेयसे विवदमानाः' इत्यादिश्रुतौ न प्राणादिमात्रस्य व्यपदेशः, अपितु] प्राणाद्यभिमानिनीनां देवतानां तत्र व्यपदेशो भवति । कुतः, विशेषानुगतिभ्याम् = 'एता ह वै देवता अहंश्रेयसे विवदमानाः' इत्यत्र श्रुतौ प्राणानां चेतनवाचिना देवताशब्देन विशेषितत्वात्, 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' ऐ.आ. (२/४/२/४) इत्यादिमन्त्रार्थवादादिषु सर्वत्र तदभिमानिदेवतानामनुगतिश्रवणाच्च न चेतनं जगत् । तस्मादचेतनस्य जगतो वैलक्षण्यान्न चेतनप्रकृतिकत्वम् ।

**सू०— दृश्यते तु ॥ ६ ॥**

पद०- दृश्यते, तु ।

पदा०- सूत्रस्थतुशब्दः पूर्वपक्षनिरासार्थकः । यदुक्तं चेतनविलक्षणं जगन्न तत्प्रकृतिकमिति, तन्न, चेतनात्पुरुषात्तद्विलक्षणानां नखलोमादीनामचेतनानाम्, अचेतनाच्च गोमयाच्चेतन-

वृश्चिकादीनामुत्पत्तिर्यतो दृश्यतेऽत इत्यर्थः ।

## सू०-असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

पद०- असत्, इति, चेत्, न, प्रतिषेधमात्रत्वात् ।

पदा०- [चेतनस्य नामरूपादिहीनस्याचेतननामादिमज्जगद्धेतुत्वे उत्पत्तेः पूर्वं जगत्] असदिति चेत् = असदेव स्यादिति चेत्, न = उपरोक्तं तव निश्चयं न युक्तिसंगतम् । कुतः, प्रतिषेधमात्रत्वात् = असत्स्यादिति योऽयं प्रतिषेधः तन्मात्रत्वात्, न तु तस्य प्रतिषेध्यमस्तीत्यर्थः । कार्यसत्तायाः कारणाव्यतिरेकात्स्थितिदशायामिवोत्पत्तेः पूर्वमपि ब्रह्मात्मकमेवेदं जगन्नासदितिभावः ।

## सू०- अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

पद०- अपीतौ, तद्वत्, प्रसङ्गात्, असमञ्जसम् ।

पदा०- [शुद्धत्वादिगुणकं ब्रह्म जगदुपादानमिति] असमञ्जसम् = अयुक्तियुक्तम् । कुतः, अपीतौ = प्रलयसमये, तद्वत् = कार्यवत् कारणस्यापि ब्रह्मणोऽशुद्धत्वादिः प्रसज्येतेत्यर्थः । प्रलयेऽशुद्ध्यादिगुणकं जगत् ब्रह्मणि लीयमानं स्वनिष्ठाशुद्ध्यादिधर्मैर्ब्रह्म दूषयेदितिभावः ।

## सू०—न तु दृष्टान्तभावात् ॥ ९ ॥

पद०—न, तु दृष्टान्तभावात् ।

पदा०-अत्र सूत्रे तुरेवकारार्थः ।[पूर्वोक्तमसमञ्जसम्] न = नास्त्येव । कुतः, दृष्टान्तभावात् = कार्यं कारणे लीयमानं स्वधर्मेण कारणं न दूषयतीत्यस्मिन्नर्थे शतशो दृष्टान्तानां, यथा घटादिकं कार्यं मृदि लीयमानं मृदं स्वधर्मेण न दूषयतीत्येवमादिकानां सत्त्वादित्यर्थः ।

## सू०—स्वपक्षदोषाच्च ॥ १० ॥

पद०—स्वपक्षदोषात्, च ।

पदा०—ये दोषाः विलक्षणत्वात् प्रकृतिविकारभावानुपपत्तिः, उत्पत्तेः प्राक् जगतोऽसत्त्वप्रसङ्गः, अपीतौ तद्वत्प्रसङ्ग इति सांख्येनोद्भाविताः, ते सांख्यपक्षेऽपि समानाः । यथा शब्दादिहीनप्रधानसकाशाच्छब्दादिमतो विलक्षणस्य जगत उत्पत्त्यङ्गीकारादित्यर्थः । वस्तुतः प्रपञ्चसत्यत्ववादिनः सांख्यस्यैवैते दोषाः, न मेऽनिर्वचनीयवादिन इति भावः ।

सू०—तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्ष- प्रसङ्गः ॥११॥

पद०—तर्काप्रतिष्ठानात्, अपि, अन्यथा, अनुमेयम्, इति, चेत्, एवम्, अपि, अनिर्मोक्षप्रसङ्गः।

पदा०— तर्काप्रतिष्ठानात् = केवलतर्कस्याप्रतिष्ठितत्वाच्च न तेन समन्वयविरोधशङ्केत्यर्थः। (ननु कस्यचित्तर्कस्याप्रतिष्ठित—त्वेऽपि ) अन्यथानुमेयमिति चेत् = अप्रतिष्ठिततर्कादन्येन प्रकारेण प्रतिष्ठिततर्केण समन्वयविरोधादिकमनुमेयमिति चेत्, अत्र समाधत्ते—एवमपि = अन्यत्र तर्कस्य प्रतिष्ठितत्वेऽपि प्रकृते लिङ्गादिहीने ब्रह्मणि वेदनिरपेक्षस्य तर्कस्याप्रतिष्ठितत्वदोषादनिर्मोक्षप्रसङ्गः। तस्मादागमविरोधितर्कोऽप्रमाणमिति न तेन विरोध इति सिद्धम्।

अधिकरणसार

वैलक्षण्याख्यतर्केण बाध्यतेऽथ न बाध्यते।
बाध्यते साम्यनियमात् कार्यकारणवस्तुनोः ॥१॥
मृद्घटादौ समत्वेऽपि दृष्टं वृश्चिककेशयोः।
स्वकारणेन वैषम्यं तर्काभासो न बाधकः ॥२॥

## ४- शिष्टापरिग्रहाधिकरणम् सू० १२

**सू०—एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१२॥**

पद०— एतेन, शिष्टापरिग्रहाः, अपि, व्याख्याताः ।

पदा०- एतेन = मन्वादिभिः शिष्टैः केनचित्सत्कार्यवादाद्यंशेन परिगृहीतप्रधानवादनिराकरणप्रकारेण, शिष्टापरिग्रहाः = शिष्टैः केनचिदप्यंशेनापरिगृहीता अण्वादिकारणवादाः, व्याख्याता = निरस्ता द्रष्टव्याः । अतस्तार्किकन्यायस्य वेदबाधितत्वान्न तेन विरोध इति सिद्धम् ।

अधिकरणसार

बाधोऽस्ति परमाण्वादिमतैर्नो वा यतः पटः ।
न्यूनतन्तुभिरारब्धो दृष्टोऽतो बाध्यते मतैः ॥ १ ॥
शिष्टेष्टाऽपि स्मृतिस्त्यक्ता शिष्टत्यक्तमतं किमु ।
नातो बाधो विवर्ते तु न्यूनत्वनियमो न हि ॥ २ ॥

## ५- भोक्त्रापत्त्यधिकरणम् सू० १३

**सू०- भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥१३॥**

पदा०— भोक्त्रापत्तेः, अविभागः, चेत्, स्यात्, लोकवत् ।

पदा०-पूर्वपक्षः- [अद्वितीयब्रह्मणो जगदुपादानत्वे भोक्तृभोग्य-प्रपञ्चस्य सर्वस्य ब्रह्मानन्यत्वेन] भोक्त्रापत्तेः = भोग्यशब्दादेर्भोक्त्रात्मकत्वापत्तेः, भोक्तुर्भोग्यात्मकत्वापत्तेः प्रत्यक्षसिद्धः परस्परः अविभागश्चेत् = विभागो न स्यात्, अतः प्रत्यक्षेण समन्वयो विरुध्येत इति चेत्। सिद्धान्तः- (एकब्रह्मोपादानकत्वेऽपि भोक्तृभोग्यप्रपञ्चस्य परस्परं विभागः] स्यात् = भवत्येव। कुतः, लोकवत् = यथा लोके मृदात्मना अभिन्नानां घटादीनां परस्परं भेदोऽस्ति तद्वत्। अतः कल्पितभेदसत्त्वान्न प्रत्यक्षविरोध इति सिद्धम्।

अधिकरणसार

अद्वैतं बाध्यते नो वा भोक्तृभोग्यविभेदतः।
प्रत्यक्षादिप्रमासिद्धो भेदोऽसावन्यबाधकः ॥ १ ॥
तरङ्गफेनभेदेऽपि समुद्रेऽभेद इष्यते।
भोक्तृभोग्यविभेदेऽपि ब्रह्माद्वैतं तथाऽस्तु तत् ॥ २ ॥

## ६- आरम्भणाधिकरणम् सू० १४-२०

**सू०-तदनन्यत्वमारम्भणशब्दादिभ्यः ॥१४॥**

पद०—तदनन्यत्वम्, आरम्भणशब्दादिभ्यः ।

पदा०—तत = तस्मात्कारणात् ब्रह्मणः, कार्यस्य जगतोऽनन्यत्वम् = पृथक्सत्ताराहित्यन् । कुतः, आरम्भणशब्दादिभ्यः = 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्,' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा,' 'ब्रह्मैवेदं सर्वम्' इत्यादिशब्देभ्यः ।

सू०-भावे चोपलब्धेः ॥ १५ ॥

पद०—भावे, च, उपलब्धेः ।

पदा०—कारणस्य ब्रह्मणः भावे = सत्त्वे कार्यस्योपलब्धेः, मृदि सत्यां घटस्येव । न हि मृद्व्यतिरेकेण घटो नाम कश्चिदुपलभ्यते । अतः कारणव्यतिरेकेण कार्यं नास्तीत्यर्थः ।

सू०-सत्त्वाच्चावरस्य ॥१६॥

पद०—सत्त्वात्, च, अवरस्य ।

पदा०—च = अथ च, अवरस्य = कार्यस्योत्पत्तेः प्राक्कारणानन्यत्वेन, सत्त्वात् = 'ब्रह्म वा इदमग्र आसीत्' इत्यादिश्रुतौ सत्त्वश्रवणात् उत्पत्त्यनन्तरमप्यनन्यत्वं सिद्धमित्यर्थः ।

सू०—असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥१७॥

पद०—असद्‍व्यपदेशात्, न, इति, चेत् न, धर्मान्तरेण, वाक्यशेषात् ।

पदा०— 'असद्वा इदमग्र आसीत्' इत्यादिना प्रागुत्पत्तेः असद्‍व्यपदेशात् = न कार्यस्य कारणात्मना सत्त्वमिति चेत्, न = न ह्यत्यन्तासत्त्वाभिप्रायेणायमसत्त्वव्यपदेशः । किन्तु व्याकृतत्वरूप—धर्मापेक्षया अव्याकृतत्वं धर्मान्तरम्, तेनायमसत्त्वव्यपदेशः । कुतः, वाक्यशेषात् = 'तत्सदासीत्' इति वाक्यशेषात् । अतः कारणादनन्यत्वं कार्यं सिद्धमित्यर्थः ।

किञ्च—

## सू०-युक्तेः शब्दान्तराच्च ॥ १८ ॥

पद०— युक्तेः, शब्दान्तरात् च ।

पदा०—मृदात्मना पूर्वं घटस्यासत्त्वे मृदेव घटार्थिना नोपादीयेत, असत्त्वाविशेषाद्यत्किंचिदेवोपादीयेत—इत्येवमाद्यया युक्तेः—'सदेव सोम्येदमग्र आसीत्' इत्येवमादौ विद्यमानसच्छब्दान्तराच्च प्रागुत्पत्तेः कार्यस्य कारणानन्यत्वं सत्त्वं चेति सिद्धम् ।

## सू०—पटवच्च ॥ १९ ॥

पद०—पटवत्, च ।

पदा०- यथा संवेष्टितप्रसारितपटस्य विलक्षणप्रतीतिविषयत्वेऽपि न भेदस्तथा मृद्‌घटयोरित्यर्थः ।

## सू०- यथा च प्राणादिः ॥ २० ॥

पद०– यथा, च, प्राणादिः ।

पदा०-यथा च प्राणायामादिना निरुद्धः प्राणापानादिर्जीवनमात्रं कार्यं निष्पादयति, अनिरुद्धस्त्वाकुञ्चनप्रसारणादिकं कार्यं निर्वर्तयति, नैतावत्ता प्राणादेर्भेदोऽस्ति । तस्मात्कार्यकारणयोरनन्यत्वादद्वैतब्रह्मसमन्वये न कश्चिद्विरोध इति सिद्धम् ।

अधिकरणसार

भेदाभेदौ तात्त्विकौ स्तो यदि वा व्यावहारिकौ ।
समुद्रादाविव तयोर्बाधाभावेन तात्त्विकौ ॥ १ ॥
बाधितौ श्रुतियुक्तिभ्यां तावेतौ व्यावहारिकौ ।
कार्यस्य कारणाभेदादद्वैतं ब्रह्म तात्त्विकम् ॥ २ ॥

## ७- इतरव्यपदेशाधिकरणम् सू० २१-२३

## सू०-इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः॥२१॥

पद०– इतरव्यपदेशात्, हिताकरणादिदोषप्रसक्तिः ।

पदा०- इतरव्यपदेशात् = इतरस्य जीवस्य तत्त्वमस्यादिना ब्रह्मत्व-व्यपदेशात्, वा = अथवा, इतरस्य ब्रह्मणो 'अनेन जीवेनात्मनानुप्रविश्य' इत्यादिना शारीरत्वव्यपदेशात्, ब्रह्मणःस्रष्टृत्वे जीवस्यैव स्रष्टृत्वात् हिताकरणादिदोषप्रसक्तिः, नन्व्यत्थासेन अहितजरामरणादिबहुविधानर्थंकरणरूपदोषस्य प्रसक्ति-र्ब्रह्मणः—इत्यतस्तस्याभ्रान्तचेतनत्वे नानिष्टजगज्जनकत्वायोगादुक्तसमन्वयो विरुद्ध्यत इत्यर्थः ।

## सू०- अधिकं तु भेदनिर्देशात् ॥ २२ ॥

पद०- अधिकम्, तु, भेदनिर्देशात्

पदा०- सूत्रस्थतुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। यतः शारीरात् अधिकम् = सर्वज्ञं सर्वशक्ति ब्रह्म जगदुपादानं स्रष्टृ चेति ब्रूमः, अतो न हिताकरणादिदोषप्रसक्तिः । कुतः ? भेदनिर्देशात् = 'आत्मा वा अरे द्रष्टव्यः' इत्यादिना कल्पितभेदस्य व्यपदेशात् । न हि ब्रह्मणो नित्यमुक्तस्य हितमहितं वा किंचित्समस्ति,येन हिताकरणादिदोषः प्रसज्येत । अतः कल्पितभेदमादायैव सर्वस्यासांकर्योपपत्तिरिति तात्पर्यम् ।

**सू०— अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥**

पद०— अश्मादिवत्, च तदनुपपत्तिः ।

पदा०- अश्मादिवत् = एकपृथिवीजन्यानां यथा अश्मनां वज्रवैदूर्यादिभेदेन वैचित्र्यम्, तथा ब्रह्मकार्याणां स्वरूपवैचित्र्यं युज्यते । अतस्तदनुपपत्तिः = तस्योक्तदोषस्यानुपपत्तिः । तस्मात् जीवाभिन्नब्रह्मवादिसमन्वयो न विरुध्यत इति सिद्धम् ।

अधिकरणसार

हिताक्रियादि स्यान्नो वा जीवाभेदं प्रपश्यतः ।
जीवाहितक्रिया स्वार्था स्यादेषा नहि युज्यते ॥ १ ॥
अवस्तु जीवसंसारस्तेन नास्ति मम क्षतिः ।
इति पश्यत ईशस्य न हिताहितभागिता ॥ २ ॥

## ८-उपसंहारदर्शनाधिकरणम् सू० २४—२५

**सू०- उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥२४॥**

पद०— उपसंहारदर्शनात्, न, इति, चेत्, न, क्षीरवत्, हि ।

पदा०- उपसंहारदर्शनात् = लोके कुलालस्य कर्तुः दण्डचक्राद्युपसंहारदर्शनात्, मृदो वा उपादानस्य स्वभिन्नकुलालादिसहाय-

दर्शनात्, तदुभयविलक्षणस्य ब्रह्मणो न जगत्कर्तृत्वमुपादानत्वं वा सम्भवति। अतःसमन्वयो विरुध्यत इति चेदिति पूर्वपक्षः। सिद्धान्तस्तु–न क्षीरवद्धि = हि शब्दो हेत्वर्थः। यथा लोके क्षीरं बाह्यसाधनान्यनपेक्ष्य दध्याकारेण परिणमते, तद्वत् ब्रह्मापि। श्रुतिरपि ब्रह्मणोऽसहायस्य कार्यकारित्वं दर्शयति– 'न तस्थ कार्यं कारणञ्च विद्यते' इति।

## सू० देवादिवदपि लोके ॥ २५ ॥

पद०– देवादिवत्, अपि, लोके।

पदा०- लोके = लोक्यतेऽनेनेति लोकः–शब्दः मन्त्रार्थवादेतिहासपुराणादिः, तस्मिन् यथा देवाः पितर ऋषय इत्येवमाद्यश्चेतनाः स्वसिद्धिसामर्थ्यात्साधनान्तरं बाह्यमनपेक्ष्य संकल्पमात्रेणैव नानाविधकार्यकर्तार उपलभ्यन्ते, तद्वत् ब्रह्माप्यसहायमेव जगदुपादानं कर्तृ चेति तद्वादिसमन्वयो न विरुध्यत इति सिद्धम्।

अधिकरणसार

न सम्भवेत्संभवेद्वा सृष्टिरेकाद्वितीयतः ।
नानाजातीयकार्याणां क्रमाज्जन्म न संभवि ॥ १ ॥
अद्वैतं तत्त्वतो ब्रह्म तच्चाविद्यासहायवत् ।
नानार्यकरं कार्यं क्रमोऽविद्यास्थशक्तिभिः ॥ २ ॥

## ९— कृत्स्नप्रसक्त्यधिकरणम् सू० २६-२९

## सू०-कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२६॥

पद०— कृत्स्नप्रसक्तिः, निरवयवत्वशब्दकोपो, वा ।

पदा०-सिद्धान्ती प्रष्टव्यः—किं ब्रह्म निरवयवं परिणमते सावयवं वा ? आद्ये,कृत्स्नस्य ब्रह्मणः कार्याकारेण परिणामप्रसक्तिः ततश्च कार्यातिरिक्तं ब्रह्म न स्यात् । द्वितीये तु, कृत्स्नप्रसक्तिर्नास्ति, एकांशपरिणामेऽप्यपरांशस्थितिसंभवात् । तथा 'निष्कलम्' (श्वेता० ६–१९) इत्यादिनिरवयवत्वशब्दकोपः । उभयपक्षेऽप्यनित्यत्वप्रसङ्ग इति ब्रह्मणः उपादानत्ववादि-समन्वयो विरुध्यत इति ।

## सू०- श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

पद०— श्रुतेः, तु, शब्दमूलत्वात् ।

पदा०- तुः पूर्वपक्षनिरासार्थः। न तावत्कृत्स्नप्रशक्तिः । कुतः, श्रुतेः = ब्रह्मणो जगदुपादानत्वश्रवणात् । 'तावानस्य महिमा' (छा० ३-१२-६) इत्यादौ कार्यव्यतिरेकेण सत्ताश्रवणात् । एवं च विवर्तवादः श्रुत्यैव स्फुटीकृतः । न हि परिणामवादे कार्यव्यतिरेकेण सत्ता समस्ति । अतः कार्यव्यतिरेकेण ब्रह्मणोऽवस्थानश्रुतेर्नोक्तदोषावकाशः । ननु उक्तयुक्तिबाधितत्वाच्छ्रुतिर्वा कथं कार्यव्यतिरेकेण ब्रह्मणः सत्तां बोधयेदित्यत आह—शब्दमूलत्वात् = ब्रह्मणः शब्दैकप्रमाणकत्वात्, यथाशब्दं कार्योपादानत्वं तदतिरेकेण सत्त्वं चाविरुद्धमित्यर्थः ।

## सू०-आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

पद०— आत्मनि, च, एवम्, विचित्राः, च हि ।

पदा०- हि = यस्माद्धेतोः, एकस्मिन्नात्मनि = स्वप्नदृशि निरवयवे, विचित्राः = विलक्षणाः सृष्टयः श्रूयन्ते, 'न तत्र रथा न रथयोगाः' (बृ० ४-३-१०) इत्यादौ, यथा च लोके मायाविनि

स्वरूपानुपमर्देनैव हस्त्यश्वादिविचित्राः सृष्टयो दृश्यन्ते, एवमेकस्मिन्नपि ब्रह्मणि विविधसृष्टिरित्यर्थः ।

## सू०- स्वपक्षदोषाच्च ॥ २९ ॥

पद०- स्वपक्षदोषात्, च ।

पदा०- सांख्यादयोऽपि निरवयवं प्रधानं जगत्परिणामीत्यङ्गीचक्रुः । तथा च कृत्स्नप्रसक्त्यादिदोषः समानः । अणुवादिनोऽपि परमाणुद्वयसंयोगेन द्व्यणुकादिसृष्टिमुररीचक्रुः । स संयोगः किं व्याप्यवृत्तिः, अव्याप्यवृत्तिर्वा । आद्ये दृष्टविरोधः । द्वितीये सावयवत्वं विना अव्याप्यवृत्तिसंयोगानुपपत्तिः, निरवयवत्वव्याकोप इत्यादिदोषः समानः । ब्रह्मवादे स दोषो न समस्ति । तस्मादुपपन्नो ब्रह्मकारणवादः ।

### अधिकरणसार

न युक्तो युज्यते वाऽस्य परिणामो न युज्यते ।
कार्त्स्न्याद् ब्रह्मानित्यताप्तेरंशात्सावयवं भवेत् ॥ १ ॥
मायाभिर्बहुरूपत्वं न कार्त्स्न्यान्नापि भागतः ।
युक्तोऽनवयवस्यापि परिणामोऽत्र मायिकः ॥ २ ॥

## १०– सर्वोपेताधिकरणम् सू० ३०–३१

### सू०– सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

पद०– सर्वोपेता, च तद्दर्शनात् ।

पदा०- सर्वोपेता = सर्वशक्तियुक्ता परा देवता । तद्दर्शनात् = तस्य सर्व–शक्तियोगस्य 'सर्वकर्मा सर्वकामः' (छा०- ३-१४-४) इत्यादिश्रुतौ दर्शनादित्यर्थः ।

### सू०- विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

पद०– विकरणत्वात्, न, इति, चेत्, तद्, उक्तम् ।

पदा०- [ सर्वशक्तियुक्तानामपि देवादीनां चक्षुरादिकरणवतामेव विचित्रकार्यकर्तृत्वमवगम्यते । ब्रह्मणः 'अचक्षुष्कमश्रोत्रम्' (बृ. ३-८-८) इत्यादिना ] विकरणत्वात् = विकरणत्वावगमान्न कर्तृत्वमिति चेत्, अत्र यदुत्तरं वक्तव्यं तत्पूर्वमेव 'न विलक्षणत्वात्' (ब्र.सू. २-१-४) 'देवादिवदपि लोके' (ब्र.सू. २-१-२५) इत्यादावुक्तम् । अथवा 'अपाणिपादो जवनो ग्रहीता' (श्वेता. ३–१९) इत्यादिश्रुत्या उत्तरमुक्तम् । अतः श्रुत्येक–समधिगम्यत्वान्न तर्केण विरोधशङ्कावकाश इति ।

अधिकरणसार

नाशरीरस्य मायाऽस्ति यदि वाऽस्ति न विद्यते ।
ये हि मायाविनो लोके ते सर्वेऽपि शरीरिणः ॥ १ ॥

बाह्यहेतुमृते यद्वन्मायया कार्यकारिता ।
ऋतेऽपि देहं मायैवं ब्रह्मण्यस्तु प्रमाणतः ॥ २ ॥

## ११- प्रयोजनवत्त्वाधिकरणम् सू० ३२-३३

### सू०- न प्रयोजनवत्त्वात् ॥ ३२ ॥

पद०- न, प्रयोजनवत्त्वात् ।

पदा०- न ब्रह्मणो जगत्कर्तृत्वं संभवति, नित्यतृप्तत्वेन प्रयोजनाभिसन्धिरहितत्वात्, प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वाभ्युपगमात्सन्वमो विरुध्यत इति ।

### सू० —लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

पद०- लोकवत्, तु, लीलाकैवल्यम् ।

पदा०- तुः पूर्वपक्षनिरासार्थः । यथा लोके राज—तदमात्यादीनां फलं विनैव केवललीलारूपाः प्रवृत्तयो दृश्यन्ते, यथा वोच्छ्वासादयः स्वभावादेवोत्पद्यन्ते, तथा ब्रह्मणोऽपि विचित्रकार्यरचना लीला-

कैवल्यम् = केवललीलामात्रम्, न फलसापेक्षम् । कथञ्चन राजादीनां फलसम्भवेऽपि नित्यतृप्तस्य ब्रह्मणो लीलामात्रमेतदित्यभिप्रायः ।

अधिकरणसार

तृप्तोऽस्रष्टाऽथवा स्रष्टा, न स्रष्टा फलवाञ्छने ।
अतृप्तिः स्यादवाञ्छायामुन्मत्तनरतुल्यता ॥ १ ॥
लीलाश्वासवृथाचेष्टा अनुद्दिश्य फलं यतः ।
अनुन्मत्तैर्विरच्यन्ते तस्मात्तृप्तस्तथा सृजेत् ॥ २ ॥

## १२– वैषम्यनैर्घृण्याधिकरणम् सू०-३४-३५

## सू०- वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३४ ॥

पद०– वैषम्यनैर्घृण्ये, न, सापेक्षत्वात्, तथा, हि, दर्शयति ।

पदा०- वैषम्यनैर्घृण्ये न = ब्रह्मणो वैषम्यनैर्घृण्ये न स्याताम् । कुतः, सापेक्षत्वात् = प्राणिकर्मसापेक्षत्वात् । कर्मानपेक्षत्वे हि वैषम्यादिदोषः स्यात् । न च सापेक्षत्वेऽनीश्वरत्वप्रसङ्गः, भृत्यादिसेवानुसारेण फलदातृ राज्ञो राजत्वदर्शनात्, [ननु कस्मात् ब्रह्मणः कर्मसापेक्षत्वमत आह] तथाहि दर्शयति = 'एष ह्येव

साधु कर्म कारयति' (कौ० उ०-२-८) इत्यादिश्रुतिः ब्रवीति ।

**सू०-न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥**

पद०— न, कर्म,अविभागात्, इति, चेत्, न, अनादित्वात् ।

पदा०-'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा०६-२-१) इत्यादिना सृष्टेः प्रागविभागावधारणान्न तदानीं कर्मास्ति । ततः कर्मापेक्षया विषमा सृष्टिरित्यसंगतमिति चेत्,न, अनादित्वात् संसारस्य बीजाङ्कुरवद्धेतुमद्भावोपपत्तेरित्यर्थः ।

**सू०—उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥**

पद०— उपपद्यते, च, अपि, उपलभ्यते, च ।

पदा०-ससारस्यानादित्वमुपपद्यते च । अन्यथा अकस्मादेव सृष्ट्यङ्गीकारे मुक्तस्यापि पुनर्जन्मप्रसङ्गात्, पूर्वपूर्वसृष्टिसादृश्यानुपपत्तेश्च । उपलभ्यते च संसारस्यानादित्वम्-'धाता यथापूर्वमकल्पयत्, (तै. आ.-१०-१-१५) 'न रूपमस्येह तथोपलभ्यते-नान्तो न चादिर्न च संप्रतिष्ठा' (गीता-१५-३) इति श्रुति स्मृत्योरित्यर्थः ।

अधिकरणसार

वैषम्याद्यापतेर्नो वा सुखदुःखे नृभेदतः ।
सृजन्विषम ईशः स्यान्निर्घृणश्चोपसंहरन् ॥ १ ॥
प्राण्यनुष्ठितधर्मादिमपेक्ष्येशः प्रवर्तते ।
नातो वैषम्यनैर्घृण्ये संसारस्तु न चाऽऽदिमान् ॥ २ ॥

## १३– सर्वधर्मोपपत्त्यधिकरणम् सू० ३७

### सू०– सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

पद०– सर्वधर्मोपपत्तेः, च ।

पदा०– जगत्कारणत्व–सर्वज्ञत्वादयः कारणधर्मा ये विद्यन्ते, तेषां सर्वेषां पूर्वोक्तप्रकरेण ब्रह्मण्येवोपपत्तेर्ब्रह्मैव जगत्कारण–मित्यर्थः । अयं भावः–यन्निर्गुणं तन्नोपादानमिति व्याप्तौ किं परिणामित्वाभावो व्यापकः,उत विवर्तोपादानत्वाभावः?नाद्यः, इष्टत्वात् । न द्वितीयः, आरोपितनित्यत्वोपादाने जात्यादौ व्यभिचारात् । अतः निर्गुणत्वेऽपि ब्रह्मणो न विवर्तोपादानत्वं

विरुद्धम् इति । तस्मान्न कथंचिदपि समन्वयस्त विरोध इति सिद्धम् ।

अधिकरणसार

नास्ति प्रकृतिता यद्वा निर्गुणस्याथ्यिास्ति नास्ति सा ।
मृदादेः सगुणस्यैव प्रकृतित्वोपलम्भनात् ॥ १ ॥
भ्रमाधिष्ठानताऽस्माभिः प्रकृतित्वमुपेयते ।
निर्गुणेऽप्यस्ति जात्यादौ सा ब्रह्म प्रकृतिस्ततः ॥ २ ॥

॥ इति द्वितीयाध्यायस्य प्रथमपादः ॥

# द्वितीयाध्यायस्य द्वितीयः पादः

[अत्र पादे सांख्यादिमतानां दुष्टत्वप्रदर्शनम्]

## १- रचनानुपपत्त्यधिकरणम् सू०- १—१०

### सू०- रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

पद०— रचनानुपपत्तेः, च, न, अनुमानम् ।

पदा०- नानुमानम् = नोक्तानुमानद्धि प्रधानं जगदुपादानम् । कुतः, रचनानुपपत्तेः = अचेतनात् स्रष्टव्यज्ञानशून्यात् प्रधानात् अनेकविधविचित्रजगद्रचनानुपपत्तेरित्यर्थः । लोके विचित्र— प्रासादादिरचनायाः बुद्धिकुशलशिल्प्यादिकार्यत्वदर्शनादिति— भावः । सूत्रे चशब्देन हेतोः स्वरूपासिद्धं समुच्चिनोति । सुखादीनामान्तरत्वप्रतिपत्तेः तदन्वितत्वं जगतोऽसिद्धम् । तस्मान्न प्रामाणिकः सांख्यसिद्धान्त इति ।

### सू०— प्रवृत्तेश्च ॥ २ ॥

पद०— प्रवृत्तेः, च ।

पदा०- लोके हि अचेतनरथादिप्रवृत्तेः चेतनाधीनत्वदर्शनात् प्रधानस्य साम्यावस्थाप्रच्युतिरूपप्रवृत्तेश्चेतनप्रेरणमन्तरेण अनुपपत्तेरित्यर्थः ।

## सू०— पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

पद०— पयोम्बुवत्, चेत्, तत्र, अपि ।

पदा०- ननु-अचेतनस्य स्वयं प्रवृत्तिर्दृश्यते । यथा क्षीरं वत्सविवृद्धये स्वयमेव प्रवर्तते, यथा वा जलं स्वयमेव स्यन्दते, तद्वत् प्रधानमपि स्वयमेव प्रवर्तत इति चेत्, तत्रापि परमात्मैव प्रेरकः श्रूयते—'सोऽप्सु तिष्ठन्' (बृ०३-७-४) इत्यादिना । तथा च पयोम्बुनोः पक्षत्वान्न व्यभिचार इति भावः ।

## सू०- व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

पद०— व्यतिरेकानवस्थितेः, च अनपेक्षत्वात् ।

पदा०- सांख्यमते गुणाः साम्येनावस्थिताः प्रधानम्, तद्व्यतिरेकेण सहकार्यन्तरस्यानवस्थितेः पुरुषस्य तु असङ्गोदासीनत्वेन प्रवृत्तौ निवृत्तौ वा अनपेक्षत्वाभ्युपगमादित्यर्थः ।

सू०- अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

पद०- अन्यत्र, अभावात्, च, न, तृणादिवत् ।

पदा०- तृणादिकं निमित्तान्तरनिरपेक्षमेव क्षीराकारेण परिणमते, तद्वत् प्रधानमपीति चेत्, न । कुतः, अन्यत्राभावात् = धेन्वादेरन्यत्र बलीवर्दादौ तृणादेः क्षीरभावस्याभावादित्यर्थं । धेन्वादिसापेक्षमेव तृणादिकं क्षीरं भवति । निरपेक्षत्वे बलीवर्दादावपि क्षीरभावप्रसङ्गादिति भावः ।

सू०- अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

पद०- अभ्युपगमे, अपि, अर्थाभावात् ।

पदा०- प्रधानस्य स्वतः प्रवृत्त्यभ्युपगमेऽपि पुरुषार्थस्यापेक्षाभाव-प्रसङ्गादित्यर्थः । न चेष्टापत्तिः, प्रधानमचेतनं चेतनस्य पुरुषार्थं साधयितुमेव प्रवर्तत इति स्वाभ्युपगमविरोधादिति भावः ।

सू०-पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

पद०- पुरुषाश्मवत्, इति, चेत्, तथापि ।

पदा०-लोके यथा पङ्गुपुरुषः स्वयमप्रवर्त्तमानोऽपि अन्यमन्धं प्रवृत्ति-

शक्तिमन्तं प्रवर्तयति, यथा वा अयस्कान्तोऽश्मा संनिधिमात्रेणायः प्रवर्तयति, एवं पुरुषः प्रवर्तक इति चेत्, तथापि प्रधानस्य पुरुषप्रेर्यत्वे स्वातन्त्र्याभ्युपगमविरोधः, पुरुषस्य प्रवर्तकत्वे कौटस्थ्यहानिरित्यादि दोषाणामनिर्मोक्षः । ब्रह्मणस्त्वाविद्यकं प्रवर्तकत्वमिति न कौटस्थ्यहानिः ।

## सू०- अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

पद०- अङ्गित्वानुपपत्तेः, च ।

पदा०- सांख्यमते गुणत्रयसाम्यावस्था प्रकृतिः, सा कूटस्था वा, विकारिणी वा? आद्ये, परस्परानपेक्षाणांगुणानां साम्यावस्थाप्रच्युत्यभावेन अङ्गाङ्गित्वानुपपत्तेः कार्यानुदयप्रसङ्गः । द्वितीये स्वतः प्रच्युतिः, उतान्यतः? नाद्यः सदा कार्यप्रसङ्गात् । न द्वितीयः पुरुषस्योदासीन्याभ्युपगमहाने । अतः प्रच्युत्यभावेन अङ्गाङ्गिभावानुपपत्तेः कार्याभावप्रसङ्ग इत्यर्थं ।

## सू०- अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥९॥

पद०- अन्यथा, अनुमितौ, च, ज्ञशक्तिवियोगात् ।

पदा०- न वयमनपेक्षस्वभावान्कूटस्थान्गुणाननुमिमीमहे, अपितु

अन्यथा = प्रकारान्तरेण गुणानन्योन्यसापेक्षान्, एवमनुमितौ न प्रागुक्तदोषप्रसक्तिरिति चेत्, न, ज्ञशक्तिवियोगात् = गुणानां ज्ञानशक्तिरहितत्वादित्यर्थः। स्वतःप्रच्युत्यभावेन अङ्गाङ्गिभावानुपपत्तेः कार्यानुदयप्रसङ्गस्तदवस्थ एवेति भावः।

**सू०- विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥**

पद०–विप्रतिषेधात्, च, असमञ्जसम्।

पदा०- सांख्या हि क्वचिन्महतः पञ्चतन्मात्रसर्गं संगिरन्ते, क्वचिदहंकारात्, क्वचिदेकादशेन्द्रियाणि, क्वचिद् बाह्येन्द्रियाणित्वगिन्द्रियेऽन्तर्भाव्य सप्तेन्द्रियाणीति। एवं च परस्परविप्रतिषेधादसमञ्जसं सांख्यमतम्। तस्मात् सांख्यसिद्धान्तो भ्रान्तिमूलकएवेति सिद्धम्।

अधिकरणसार

प्रधानं जगतो हेतुर्नवा सर्वे घटादयः।
अन्विताः सुखदुःखाद्यैर्यतो हेतुरतो भवेत् ॥ १ ॥
न हेतुर्योग्यरचनाप्रवृत्यादेरसम्भवात्।
सुखाद्या आन्तरा बाह्या घटाद्यास्तु कुतोऽन्वयः ॥ २ ॥

## २- महद्दीर्घाधिकरणम् सू०- ११

### सू०- महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

पद०- महद्दीर्घवत्, वा, ह्रस्वपरिमण्डलाभ्याम् ।

पदा०- ह्रस्वपरिमण्डलाभ्याम् = द्व्यणुकपरमाणुभ्याम्, महद्दीर्घवत् = चशब्दार्थक वाशब्दात् ह्रस्वाणुवच्च, चेतनात् ब्रह्मणोऽचेतनं जगद् भवतीति योजना ।

अधिकरणसार

नास्ति काणाददृष्टान्तः किं वाऽस्त्यसदृशोद्भवे ।
नास्ति शुक्लपटः शुक्लातन्तोरेव हि जायते ॥ १ ॥
अणुद्व्यणुकमुत्पन्नमनणोः परिमण्डलात् ।
अदीर्घाद् द्व्यणुकाद्दीर्घं त्र्यणुकं तन्निदर्शनम् ॥ २ ॥

## ३—परमाणुजगदकारणत्वाधिकरणम् सू०-१२-१७

### सू०- उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

पद०- उभयथा, अपि, न कर्म, अतः, तदभावः ।

पदा०- वैशेषिकाः खलु कर्मणा प्राक् सृष्टेर्निश्चलयोः परमाण्वोः संयोगे द्व्यणुकाद्युत्पत्तिरित्याचक्षते । तस्य कर्मणः किंचिन्निमित्तमभ्यु

पगम्यते वा, न वा। आद्ये, कर्मनिमित्तत्वेन प्रसिद्धं जीव-प्रयत्नाभिघातादिकमङ्गीकर्तव्यम्। न हि तत्संभवति, सृष्ट्युत्तरकालीनत्वात् तस्य। द्वितीये कर्मानुत्पत्तिः। अत उभयथापि न कर्म, अदृष्टस्याचेतनस्य स्वतः कर्माभिमुख्यायोगात्। अतः कर्माभावात्, तदभावः = द्व्यणुकादिक्रमेण सृष्ट्युत्पादस्याभाव इति दिक्। तस्माद्वैशेषिकसिद्धान्तो भ्रान्तिमूलक इति सिद्धम्

**सू०-समवायाभ्युपगमाच्च साम्यादनवस्थितेः॥१३॥**

पद०- समवायाभ्युपगमात्, च, साम्यात्, अनवस्थितेः।

पदा०-तदभाव इत्यनुषङ्गः। तस्य द्व्यणुकादिसृष्ट्युत्पादस्याभावः। कुतः, परमाणुद्व्यणुकानां समवायाभ्युपगमात्। अस्त्वभ्युपगमः, किं तेन-साम्यादनवस्थितेः। यथैव हि अणुभ्यामत्यन्तभिन्नं सत् द्व्यणुक समवायेन ताभ्यां सम्बध्यते, एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन् अन्येन समवायेन समवायिभिः सम्बध्येत, अत्यन्तभेदसाम्यात्, ततश्च तस्यान्योऽन्यः समवायः कल्पनीय इत्यनवस्थानात्। एवं च समवायासिद्धौ

समवेतद्व्यणुकादिसृष्ट्यसिद्धिः स्यादित्यर्थः ।

### सू०—नित्यमेव च भावात् ॥ १४ ॥

पद०— नित्यम, एव, च, भावात् ।

पदा०- परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेः नित्यमेव भावात् प्रलयाभावप्रसङ्ग । निवृत्तिस्वभावत्वे निवृत्तेः नित्यमेव सत्त्वात् सृष्ट्यभावप्रङ्ग इत्यर्थः ।

### सू०-रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥१५॥

पद०— रूपादिमत्त्वात्, च, विपर्ययः, दर्शनात् ।

पदा०— वैशेषिकमते जगत्कारणपरमाणूनां रूपादिमत्त्वात् निरवयवत्वाणुत्वनित्यत्वविपर्ययः सावयवत्वादिः प्रसज्येत, लोके रूपादिमतः पटादेस्तथा दर्शनादित्यर्थः ।

### सू०— उभयथा च दोषात् ॥ १६ ॥

पद०— उभयथा, च, दोषात् ।

पदा०-वैशेषिकेमते परमाणवः किमुपचितानुपचितगुणात्मकाः कल्प्यन्ते, न वा । आद्ये, अणुत्वव्याघातः, उपचितानुपचित गुणात्मकपृथिव्यादेः स्वरूपोपचयदर्शनात् । द्वितीये, तत्कार्यं पृथिव्या-

दिपुरूपाद्यनुपलम्भप्रसङ्ग इति उभयथापि दोषादनुपपन्नः परमाणुकारणवादः ।

## सू०– अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

पद०– अपरिग्रहात्, च, अत्यन्तम् अनपेक्षा ।

पदा०- परमाणुकारणवादस्य केनचिदप्यंशेन कैश्चिदपिशिष्टैः अपरिग्रहात् तत्रात्यन्तमनपेक्षाश्रेयोर्थिभिः कर्तव्या । अतोवैशेषिकसिद्धान्तो भ्रान्तिमूल एवेति सिद्धम् ।

अधिकरणसार

जनयन्ति जगन्नो वा संयुक्ताः परमाणवः ।
आद्य कर्मज संयोगाद् द्व्यणुकादि क्रमाज्जनिः ॥ १ ॥

सनिमित्तानिमित्तादि विकल्पेष्वाद्य कर्मणः ।
असंभवादसंयोगे जनयन्ति न ते जगत् ॥ २ ॥

## ४– समुदायाधिकरणम् सू०– १८—२७

## सू०- समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

पद०– समुदाये, उभयहेतुके, अपि, तदप्राप्तिः ।

पदा०-उभयहेतुकेऽपिसमुदाये = परमाणुहेतुके बाह्यसमुदाये स्कन्धहेतुके

आध्यात्मिकसमुदाये च, तदप्राप्तिः = तस्य समुदायस्याप्राप्तिः, अचेतनानां परमाणूनां स्कन्धानां च स्वतः समुदायायोगात्, अन्यस्य च स्थिरस्य चेतनस्य समुदायकर्तुरनभ्युपगमात्। अतः तन्मतं भ्रान्तिमूलमिति सिद्धम्।

**सू०- इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥**

पद०- इतरेतरप्रत्ययत्वात्, इति, चेत्, न, उत्पत्तिमात्रनिमित्तत्वात्।

पदा०- अविद्यासंस्कारो विज्ञानमित्येवं जातीयकानामविद्यादीनाम् इतरेतर प्रत्ययत्वात् = इतरेतरकारणत्वात् घटीयन्त्रवदनिशमावर्तमानेषु अविद्यादिषु अर्थादाक्षिप्तः संघात उपपद्यत इति चेत्, न, उत्पत्तिमात्रनिमित्तत्वात् = अविद्यादीनामितरेतरकारणत्वेऽपि उत्पत्तिमात्रेनिमित्तत्वात् तवाभिमतो हेत्वधीनः कारणसमुदायाधीनश्च कार्योत्पादो न सम्भवति, संहन्तुः स्थिरस्य चेतनस्यानङ्गीकारादित्यर्थः।

**सू०- उत्तरोत्पादेचपूर्वनिरोधात् ॥ २० ॥**

पद०- उत्तरोत्पादे, च, पूर्वनिरोधात्।

पदा०- कार्यकाले विद्यमानस्यैव मृदादेः कारणत्वं दृश्यते। न तु

नष्टस्य। भवन्मते तु उत्तरस्य कार्यक्षणस्य उत्पादे पूर्वस्य कारणक्षणस्य निरोधात् विनाशाङ्गीकारादित्यर्थः।

**सू०- असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥२१॥**

पद०- असति, प्रतिज्ञोपरोधः, यौगपद्यम्, अन्यथा।

पदा०- असति हेतौ कार्योत्पत्त्यङ्गीकारे पूर्वं ज्ञान चक्षुरालोक विषयेषु-चतुर्षु हेतुषु सत्सु कार्यं नीलादिविज्ञानं जायते इत्यस्याः प्रतिज्ञाया उपरोधः स्यात्। अन्यथा कार्यं सहेतुकमित्यङ्गीकृत्य कार्यपर्यन्तं हेतोःस्थित्यङ्गीकारे, हेतु फलयोः यौगपद्यम् = एकस्मिन्काले स्थितिः स्यादित्यर्थः। एवं च क्षणिकत्वप्रतिज्ञा-हानिरितिभावः।

**सू०- प्रतिसंख्याऽप्रतिसंख्या निरोधाप्राप्तिर-विच्छेदात् ॥ २२ ॥**

पद०- प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिः, अविच्छेदात्।

पदा०- वैनाशिकाः खलु भावानां बुद्धिपूर्वकनाशोऽबुद्धिपूर्वकनाशो-आकाशश्चेति त्रितयमपि अवस्तु निरुपाख्यमित्याचक्षते। तत्र आकाशंपरस्तात् प्रत्याख्यास्यति, नाशद्वयमधुनाप्रत्याचष्टे। प्रतिसंख्याऽप्रतिसंख्यानिरोधौ = बुद्धिपूर्वकाबुद्धिपूर्वक नाशौ,

तयोः संतानसन्तानिषु अप्राप्तिः = असंभवः। कुतः,अविच्छेदात् = न तावन्निरोधद्वयस्य संतानगोचरत्वम् संतानस्याविच्छेदात्। नापि संतानिप्रतियोगिकत्वम्, संतानिनां घटादीनां क्षणिकत्वेनबुद्धिपूर्वक नाशायोगात्। नाप्यबुद्धिपूर्वकसमूलनाशस्त्वदभ्युपगतः संभवति, मूलस्यमृदादेः प्रत्यभिज्ञायमानत्वात्। तस्मान्निरोधद्वयस्यानुपपत्तिरित्यर्थः ।

## सू० —उभयथा च दोषात ॥ २३ ॥

पद०– उभयथा, च, दोषात् ।

पदा०- क्षणिकेषु स्थिरत्वादिभ्रांतिः अविद्या । तस्याः किं सम्यग्ज्ञानान्नाशः, स्वतोवा । नाद्यः, निर्हेतुकनाशाभ्युपगम हानिप्रसङ्गात्, न द्वितीयः, सम्यग्ज्ञानोपदेशानर्थक्यादिति उभयथापिदोषादसंगतं सौगतमतमित्यर्थः ।

## सूत्र- आकाशे चाविशेषात् ॥ २४ ॥

पद०– आकाशे, च, अविशेषात् ।

पद०- 'आत्मन आकाशः सम्भूतः' (तै० २-१-१) इति श्रुत्या शब्दगुणत्वेन चाकाशेऽपि पृथिव्यादिवद्वस्तुत्वप्रतिपत्तेरविशेषात् न

निरुपाख्यत्वमित्यर्थः ।

## सू०— अनुस्मृतेश्च ॥ २५ ॥

पद०— अनुस्मृतेः, च ।

पदा०— अनुभवमनु उत्पद्यमाना स्मृतिः अनुस्मृतिः, तद् बलात् आत्मनोऽनुभवितुः न क्षणिकत्वमित्यर्थः । अन्यस्यानुभूतेविषये अन्यस्यस्मरणायोगादितिभावः ।

## सू०- नासतोऽदृष्टत्वात् ॥ २६ ॥

पद०— न, असतः, अदृष्टत्वात् ।

पदा०— असतोऽभावात्कार्योत्पत्तिर्नयुक्ता । कुतः, अदृष्टत्वात् = निरुपाख्यात् नरविषाणादेः कार्योत्पत्तोरदृष्टत्वात् । दृष्टत्वादितिवाच्छेदः । सत एव मृदादेर्दृष्टत्वादित्यर्थः ।

## सू०— उदासीनानामपिचैवंसिद्धिः ॥ २७ ॥

पद०— उदासीनानाम्, अपि, च, एवम्, सिद्धिः ।

पदा०- अभावाद् भावोत्पत्तिरित्यङ्गीकारे उदासीनानां तत्तत्कार्यं साधनेषु अप्रवर्तमानानामपि पुंसां स्वस्वाभिमत कार्यं सिद्धिः स्यात् । अतः वैभाषिक सौत्रान्तिकयोर्मतं भ्रान्तिमूलमेवेति–

सिद्धम् ।

अधिकरणसार

समुदायावुभौ युक्तावयुक्तौ वाऽगुहेतुकः ।
एकोऽपरः स्कन्धहेतुरित्येवं युज्यते द्वयम् ॥ १ ॥
स्थिरचेतनराहित्यात्स्वयं चाऽचेतनत्वतः ।
न स्कन्धानामणूनां वा समुदायोऽत्रयुज्यते ॥ २ ॥

## ५- अभावाधिकरणम् सू० २८—३२

### सू०— नाभाव उपलब्धेः ॥ २८ ॥

पद०— न, अभावः, उपलब्धेः ।

पदा०- विज्ञान व्यतिरिक्तानामभावो न सम्भवति । कुतः, उपलब्धेः = विज्ञानातिरिक्तानामर्थानां घटः पटः इत्याद्यनुभवसिद्धत्वादित्यर्थः ।

### सू०- वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

पद०— वैधर्म्यात्, च, न, स्वप्नादिवत् ।

पदा०- स्वप्नादिप्रत्ययस्य जाग्रत्प्रत्ययस्य च अन्योऽन्यं बाधितविषयत्वाबाधितविषयत्वरूपवैधर्म्यात् न स्वप्नादिदृष्टान्तेन

निरालम्बनत्वं जाग्रत्प्रत्ययस्येत्यर्थः, च शब्देन दृष्टान्ते साध्य-वैकल्यं सूचितं स्वप्ने प्रातिभासिकविषयाणां सत्त्वादिति। बाह्यार्थानामभावे घटज्ञानं पटज्ञानमिति ज्ञानवैचित्र्यं न स्यादिति सूत्रद्वयस्य तात्पर्यम्।

## सूत्र- न भावोऽनुपलब्धे ॥ ३० ॥

पद०— न, भावः, अनुपलब्धेः।

पदा०- वासनानां न भावो = न सद्भावः। कस्मात्, अनुपलब्धेः = त्वत्पक्षे बाह्यार्थानामनुपलब्धेरित्यर्थः। बाह्यार्थानुभवस्य च वासनां प्रति कारणत्वात् कारणाभावे कार्याभावः। किंच त्वत्पक्षे वासनानां संस्काराभिधानानामाश्रयासंभवादनुपपत्ति-रिति भावः।

## सूत्र- क्षणिकत्वाच्च ॥ ३१ ॥

पद०— क्षणिकत्वात्, च।

पदा०- आलयविज्ञानस्य क्षणिकत्वाङ्गीकारान्नाश्रयत्वमित्यर्थः।

## सूत्र—सर्वथानुपपत्तेश्च ॥ ३२ ॥

पद०— सर्वथा, अनुपपत्तेः, च।

पदा०- पश्यना-तिष्ठनेत्याद्यपशब्दप्रयोगात् ग्रन्थतोऽनुपपन्नमिदं मतम्, उक्तक्रमेणार्थतोऽनुपपन्नमेवेति सर्वथानुपपत्तेः नादरणीयं श्रेयोर्थिभः भ्रान्तिमूलं सौगतमतमिति सिद्धम्। सर्वशून्यवादिनिरासपरत्वेनापि एतानि 'नाभाव उपलब्धेः' इत्यादिसूत्राणि योजयितव्यानि ।

अधिकरणसार

विज्ञानस्कन्धमात्रत्वं युज्यते वा न युज्यते ।
युज्यते स्वप्नदृष्टान्ताद् बुद्ध्यैव व्यवहारतः ॥ १ ॥
अबाधात्स्वप्नवैषम्यं बाह्यार्थस्तूपलभ्यते ।
बहिर्वदिति तेऽप्युक्तिर्नातो धीरर्थरूपभाक् ॥ २ ॥

## ६- एकस्मिन्नसम्भवाधिकरणम् सू०- ३३-३६

### सू०- नैकस्मिन्नसम्भवात् ॥ ३३ ॥

पद०- न, एकस्मिन्, असम्भवात् ।

पदा०- नैकस्मिन्नसम्भवात् = एकस्मिन् परमात्मरूपे वस्तुनि विरुद्धधर्माणामसंभवात्, वस्तुनोऽनेकरूपत्वं नास्तीत्यर्थः । यदस्ति तदस्त्येव न नास्ति, यन्नित्यं तन्नित्यमेव नानित्यम्, यथा

प्रत्यगात्मा वस्तुभूतः । एवं प्रपञ्चस्यापि त्वन्मते वस्तुभूतत्वान्नानेकरूपत्वसंभवः । अस्मन्मते तु प्रपञ्चो न सन् नासन्, किन्तु अनिर्वचनीय एवेति सर्वव्यवहारसम्भव इति भावः ।

**सू०– एवं चात्माऽकात्स्र्न्यम् ॥ ३४ ॥**

पद०– एवम्, च, आत्माऽकात्स्र्न्यम् ।

पदा०- यथैकत्र विरुद्धधर्मासंभवो दोषः स्याद्वादे प्रसक्तः, एवमात्मनो जीवस्य अकात्स्र्न्यं परिच्छिन्नत्वमपरो दोषः स्यादित्यर्थः । तथा च परिच्छिन्नत्वादात्मनो घटादिवत् अनित्यत्वं स्यात् । देहपरिमाणत्वे मनुष्यात्मनः कर्मवशात् गजशरीरे कृत्स्ने, कृत्स्नस्यात्मनः पुत्तिकाशरीरे वा प्रवेशो न स्यादिति भावः ।

**सू०–न च पर्यायादप्यविरोधो विकारादिभ्यः ॥३५॥**

पद०– न, च, पर्यायात्, अपि, अविरोधः, विकारादिभ्यः ।

पदा०- पर्यायेणाप्यवयवगमनागमनाभ्यां तत्तत्स्थूलसूक्ष्मशरीरपरिमाणत्वस्य आत्मन्यविरोध इति, न च । कुतः, विकारादिभ्यः = आत्मनः सावयवत्वेन तत्तच्छरीरप्राप्त्या वृद्धिह्रासवत्त्वाङ्गीकारे विकारित्वप्रसक्त्या अनित्यत्वे बन्धमोक्षाभ्युपगमो

बाध्येतेत्यर्थः ।

**सू०-अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥३६॥**

पद०— अन्त्यावस्थितेः, च, उभयनित्यत्वात्, अविशेषः ।

पदा०- अन्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वेनावस्थितेः तत्पूर्वयोरुभयोरपि आद्यमध्यमपरिमाणयोः नित्यत्वप्रसङ्गात् त्रयाणामाद्यमध्यमान्त्यपरिमाणानामविशेषः = साम्यं स्यात् । अतः सौगतमतवदार्हतमतमपि अप्रामाणिकमिति सिद्धम् ।

अधिकरणसार

सिद्धिः सप्तपदार्थानां सप्तभङ्गीनयान्न वा ।
साधकन्यायसद्भावात्तेषां सिद्धौ किमद्भुतम् ॥ १ ॥
एकस्मिन्सदसत्त्वादिविरुद्धप्रतिपादनात् ।
अपन्यायः सप्तभङ्गी न च जीवस्य सांशता ॥ २ ॥

## ७— पत्यधिकरणम् सू०— ३७-४१

**सू०- पत्युरसामञ्जस्यात् ॥ ३७ ॥**

पद०— पत्युः, असामञ्जस्यात् ।

पदा०- पत्युः = ईश्वरस्य जगदुपादानप्रधानादिप्रेरकत्वेन जगन्निमित्तमात्रत्वं न सम्भवति । कुतः, असामञ्जस्यात् = ईश्वरस्य जगत्सर्जने प्रवृत्तौ रागादिदोषप्रसङ्गात् असामञ्जस्यं स्यात्, प्रवृत्तेः रागादिपूर्वकत्वेन लोके दृष्टत्वात्, दृष्टानुसारित्वात्कल्पनायाः । अस्माकं तु श्रुत्यनुसारित्वादनिर्वचनीयवादित्वाच्च न दोष इति भावः ।

## सू०- सम्बन्धानुपपत्तेश्च ॥ ३८ ॥

पद०- सम्बन्धानुपपत्तेः, च ।

पदा०- प्रेर्यप्रधानादिभिः प्रेरकस्येश्वरस्य सम्बन्धो वाच्यः, असम्बद्धस्य प्रेरकत्वायोगात् । न च सम्बन्धः सम्भवति, निरवयवत्वात्, युतसिद्धत्वाच्च संयोगसमवाययोरनुपपत्तेरित्यर्थः । सिद्धान्ते तु अविद्याप्रेरकत्वं कल्पिततादात्म्येनोपपद्यत इति भावः ।

## सू०- अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

पद०- अधिष्ठानानुपपत्तेः, च ।

पदा०- लोके कुलालस्य मृदादिप्रेरकत्वं दृष्टम्, न हीश्वरस्य प्रधा-

नादिप्रेरकत्वं सम्भवति, प्रधानस्य रूपादिहीनत्वेन तद्विषयकाधिष्ठानस्य प्रेरणाया अनुपपत्तेरित्यर्थः। सिद्धान्ते तु न दृष्टापेक्षा, श्रुत्येकशरणत्वादिति भावः।

## सू०- करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

पद०- करणवत्, चेत्, न, भोगादिभ्यः।

पदा०- करणानीन्द्रियाणि अप्रत्यक्षाण्यपि यथा जीवेन प्रेर्यन्ते, एवं प्रधानमप्रत्यक्षमपि ईश्वरेण प्रेर्यत इति चेत् न। कुतः, भोगादिभ्यः = दोषेभ्यः जीवस्य भोगार्थमिन्द्रियप्रेरकत्ववदीश्वरस्य प्रेरकत्वे तद्भोगादयः प्रसज्येरन्नित्यर्थः।

## सू०- अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

पद०- अन्तवत्त्वम्, असर्वज्ञता, वा।

पदा०- प्रधानजीवेश्वराणां या संख्या यच्च परिमाणं तदुभयमपि ईश्वरेण परिच्छिद्यते न वेति संदेहे। आद्ये, परिच्छिन्नसंख्यापरिमाणवत्त्वात् त्रयाणां घटवदन्तवत्त्वं विनाशित्वं स्यात्। द्वितीये, ईश्वरस्यासर्वज्ञत्वं स्यात्। अतो माहेश्वरसिद्धान्तो भ्रान्तिमूल एवेति सिद्धम्।

अधिकरणसार

तटस्थेश्वरवादोऽयं स युक्तोऽथ न युज्यते ।
युक्तः कुलालदृष्टान्तान्नियन्तृत्वस्य संभवात् ॥ १ ॥
न युक्तो विषमत्वादिदोषाद्वैदिक ईश्वरे ।
अभ्युपेते तटस्थत्वं त्याज्यं श्रुतिविरोधतः ॥ २ ॥

## ८— उत्पत्त्यसंभवाधिकरणम् सू० ४२-४५

### सू०— उत्पत्त्यसम्भवात् ॥ ४२ ॥

पदा०— भवतु वेदाविरुद्धांशे प्रमाणमूलत्वम्, न तत् वेदविरुद्धजीवोत्पत्त्यंशे । कुतः, वासुदेवात् जीवस्योत्पत्तेरसंभवात् । यद्युत्पत्तिरङ्गीक्रियते, तर्हि घटवदनित्यत्वापत्त्या भगवत्प्राप्तिरूप-मोक्षस्त्वदभ्युपगतः कस्य स्यात् । अतः भ्रान्तिमूलो भागवत-सिद्धान्तः ।

### सू०— न च कर्तुः करणम् ॥ ४३ ॥

पद०— न, च, कर्तुः, करणम् ।

पदा०- कर्तुः = देवदत्तादेः सकाशात् करणस्य कुठारादेः उत्पत्त्यदर्शनात् जीवात्कर्तुः करणं मनो जन्यत इत्येतदसंगतमित्यर्थः ।

## सू०— विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

पद०— विज्ञानादिभावे, वा, तदप्रतिषेधः :

पदा०- संकर्षणादीनां त्रयाणां वासुदेववद्विज्ञानादिभावे वा = विज्ञानैश्वर्यबलवन्निर्दोषनिरवद्यस्वरूपत्वेऽपि, तदप्रतिषेधः = तस्योत्पत्त्यसंभवरूप दोषस्य प्रकारान्तरेण अप्रतिषेध इत्यर्थः। किं वासुदेवादयश्चत्वारोपीश्वराः, उत संकर्षणादयस्त्रयो वासुदेवतुल्याः। आद्ये, भगवानेक एव वासुदेव इति स्वसिद्धान्तहानिः। द्वितीये, उत्पत्त्यसंभवदोषस्तदवस्थ एवेति भावः।

## सू०- विप्रतिषेधाच्च ॥ ४५ ॥

पद०— विप्रतिषेधात्, च ।

पदा०-क्वचित् ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि वासुदेवस्य गुणा इति, क्वचिच्च उक्तगुणा एव वासुदेव इति गुणगुणिनोर्भेदमभेदं च वर्णयन्ति। तथा च परस्परं विप्रतिषेधात् अप्रामाणिकमिदं भागवतमतमित्यर्थः। तस्मादेवं सांख्य-वैशेषिक-सौगतार्हत-माहेश्वर-भागवतमतानां भ्रान्तिमूलत्वेन तैर्मतैः निर—

बद्यादद्वैतात् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो न विरुध्यत इति सिद्धम् ।

अधिकरणसार

जीवोत्पत्त्यादिकं पाञ्चरात्रोक्तं युज्यते न वा ।
युक्तं नारायणव्यूहतत्समाराधनादिवत् ॥ १ ॥
युज्यतामविरुद्धांशो जीवोत्पत्तिर्न युज्यते ।
उत्पन्नस्य विनाशित्वे कृतनाशादिदोषतः ॥ २ ॥

॥ इति द्वितीयाध्यायस्य द्वितीय पादः ॥

# ब्रह्मसूत्र-द्वितीयाध्याय-तृतीयः पादः

[अत्र पादे पञ्चमहाभूतजीवादिश्रुतीनां विरोधपरिहारः]

## १- वियदधिकरणम् सू० १—७

### सूत्र- न वियदश्रुतेः ॥ १ ॥

पद०- न, वियद्, अश्रुतेः ।

पदा०- वियद् = आकाशः, न = नोत्पद्यते [कुतः] अश्रुतेः = आकाशोत्पत्तिप्रतिपादकश्रुतिवाक्याभावात् ।

### सूत्र- अस्ति तु ॥ २ ॥

पद०- अस्ति, तु ।

पदा०- सूत्रे तुशब्दः पक्षान्तरपरिग्रहार्थम्, अस्ति = छान्दोग्ये आकाशोत्पत्तिश्रुत्यभावेऽपि सा श्रुतिस्तैत्तिरीयके विद्यते, अतो विरोधस्तदवस्थः ।

### सू०- गौण्यसंभवात् ॥ ३ ॥

पद०- गौणी, असम्भवात् ।

पदा०- गौणी = आकाशोत्पत्तिश्रुतिः गौणी न तु मुख्या कुतः,

असम्भवात् = आकाशोत्पत्तौ समवायिकारणादिसामग्र्य-भावात् विभुत्वेन नित्यत्वानुमानाच्चाऽऽकाशोत्पत्तेरसम्भवात् ।

**सू०- शब्दाच्च ॥ ४ ॥**

पद०- शब्दात्, च ।

पदा०- च = अपि, शब्दात् = 'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ० २/३/३) इतिश्रुतौ आकाशेऽमृतशब्ददर्शनात् [नाकाश-स्योत्पत्तिरित्यर्थः] ।

**सूत्र- स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥**

पद०- स्यात्, च, एकस्य, ब्रह्मशब्दवत् ।

पदा०- ब्रह्मशब्दवत् = यथा एकस्मिन्नेव प्रकरणे विषयभेदात् 'अन्नं-ब्रह्म' (तै० ३/२) इत्यत्र ब्रह्मशब्दो गौणः, 'आनन्दो ब्रह्म' (तै० ३/६) इत्यत्र मुख्यः [तथा प्रकृतेऽपि विषयभेदात्] एकस्य सम्भूतशब्दस्य गौणत्वं च स्यात् ।

**सू०- प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥**

पद०- प्रतिज्ञाहानिः, अव्यतिरेकात् शब्देभ्यः ।

पदा०- अव्यतिरेकात् = औपनिषदात् ब्रह्मणः सर्वस्य वस्तुजातस्य अभेदात्, प्रतिज्ञाहानिः = एकविज्ञानात् सर्वविज्ञानप्रतिज्ञायाः

अहानिर्भवति [यदि आकाशस्योत्पत्तिर्न स्यात्, तर्हि सा प्रतिज्ञा हीयते, अतस्तत्सिद्धये आकाशस्योत्पत्तिरङ्गीकर्त्तव्या] किंच शब्देभ्यः = 'सदेव सोम्येदमग्र आसीत्' (छा० ६/२/१) 'ऐतदात्म्यमिदं सर्वम् (छा० ६/८/७) इत्यादिशब्देभ्यः कार्यकारणाभेदपरेभ्यः [ प्रतिज्ञासिद्धिरवगम्यते ] ।

**सूत्र- यावद्विकारं तु विभागो लोकवत् ।।७।।**

पद०— यावद्विकारम्, तु, विभागः, लोकवत् ।

पदा०-यावद्विकारम् = विकारजातमभिव्याप्य, विभागः = विभक्तत्वम्, [दृश्यते] लोकवत् = घटादिवत्, पृथिव्यादिभ्यो विभक्तत्वात् आकाशस्य ब्रह्मकार्यत्वं निर्विवादम् ।

अधिकरणसार

व्योम नित्यं जायते वा हेतुत्रयविवर्जनात् ।
जनिश्रुतेश्च गौणत्वान्नित्यं व्योम न जायते ।। १ ।।
एकज्ञानात् सर्वबुद्धेर्विभक्तत्वाज्जनिश्रुतेः ।
विवर्ते कारणैकत्वात् ब्रह्मणो व्योम जायते ।। २ ।।

## २ मातरिश्वाधिकरणम् सू०- ८

### सूत्र- एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

पद०– एतेन, मातरिश्वा, व्याख्यातः ।

पदा०- एतेन = आकाशस्योत्पत्तिमत्त्वव्याख्यानेन, मातरिश्वा = वायुरपि, व्याख्यातः = आकाशावच्छिन्नब्रह्मजन्यत्वेन व्याख्यातः ।

अधिकरणसार

वायुर्नित्यो जायते वा छान्दोग्येऽजन्मकीर्तनात् ।
संपाऽनस्तमिता देवतेत्युक्तेर्न च जायते ॥ १ ॥
श्रुत्यन्तरोपसंहाराद् गौण्यनस्तमयश्रुतिः ।
वियद्वज्जायते वायुः स्वरूपं ब्रह्म कारणम् ॥ २ ॥

## ३— असम्भवाधिकरणम् सू०–९

### सू०– असम्भवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

पद०– असम्भवः, तु, सतः, अनुपपत्तेः ।

पदा०-सतः = सदात्मकस्य ब्रह्मणः,असम्भवः = उत्पत्त्यसम्भवः [कुतः] अनुपपत्तेः–सत्सामान्यात् सत्सामान्यस्य उत्पत्त्यनुपपत्तेः, [विशेषस्यैव घटादेर्मृत्सामान्यजन्यत्वदर्शनात्] ।

अधिकरणसार

सद् ब्रह्म जायते नो वा, कारणत्वेन जायते ।
यत् कारणं जायते तद्वियद्वाय्वादयो यथा ॥ १ ॥
असतोऽकारणत्वेन खादीनां सत उद् भवात् ।
व्याप्तेरजादिवाक्येन बाधात् सन्नैव जायते ॥ २ ॥

## ४- तेजोऽधिकरणम् सू०—१०

## सूत्र- तेजोऽतस्तथा ह्याह ॥ १० ॥

पद०— तेजः, अतः, तथा, हि, आह ।

पदा०- तेजः = अग्निः, अतः = अस्मात् वायोर्जायते, हि = यतः तथा = वायोः जन्यत्वम्, आह = 'वायोरग्निः' इति श्रुतिः वर्णयति ।

अधिकरणसार

ब्रह्मणो जायते वह्निर्वायोर्वा ब्रह्मसंयुतात् ।
तत्तेजोऽसृजतेत्युक्तेर्ब्रह्मणो जायतेऽनलः ॥ १ ॥
वायोरग्निरिति श्रुत्या पूर्वश्रुत्येकवाक्यतः ।
ब्रह्मणो वायुरूपत्वमापन्नादग्निसंभवः ॥ २ ॥

## ५- अब्धिकरणम् सू०- ११

## सूत्र- आपः ॥ ११ ॥

पदा०- आपः = जलानि, [अतः = तेजसो जायन्ते, यस्मात् अपां तेजोजन्यत्वम् 'अग्नेरापः' (तै० २/१) इति श्रुतिराह] ।

अधिकरणसार

ब्रह्मणोऽपां जन्म किं वह्नेर्नाग्नेर्जलोद्‌भवः ।
विरुद्धत्वान्नीरजन्म ब्रह्मणः सर्वकारणत् ॥ १ ॥
अग्नेराप इति श्रुत्या ब्रह्मणो वह्न्युपाधिकात् ।
अपां जनिर्विरोधस्तु सूक्ष्मयोर्नाग्निनीरयोः ॥ २ ॥

## ६- पृथिव्यधिकरणम् सू०- १२

## सू०-पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥१२॥

पद०– पृथिवी, अधिकाररूपशब्दान्तरेभ्यः ।

पदा०- पृथिवी = अन्नशब्देनात्र पृथिव्येवोच्यते, न ओदनादि [कुतः] अधिकाररूपशब्दान्तरेभ्यः = 'तत्तोजोऽसृजत' (छा० ६-२-३) इति महाभूतोत्पत्त्यधिकारात् 'यत्कृष्णं तदन्नस्य' इति पृथिवीत्वज्ञापककृष्णरूपश्रवणात् 'अद्‌भ्यः पृथिवी' (तै० २/१) इति पृथिव्या एव तज्जन्यत्वप्रतिपादकशब्दान्तरस्य सत्त्वाच्च ।

अधिकरणसार

ता अन्नमसृजन्तेति श्रुतमन्नं यवादिकम् ।
पृथिवी वा यवाद्येव लोकेऽन्नत्वप्रसिद्धितः ॥ १ ॥

भूताधिकारात् कृष्णस्य रूपस्य श्रवणादपि ।
तथाऽद्भ्यः पृथिवीत्युक्तेरन्नं पृथ्व्यन्नहेतुतः ॥ २ ॥

## ७- तदभिध्यानाधिकरणम् सू०- १३

## सू०- तदभिध्यानादेव तु तल्लिङ्गात् सः ॥१३॥

पद०- तदभिध्यानात् एव, तु, तल्लिङ्गात्, सः ।

पदा०- सः = परमेश्वरः, तदभिध्यानादेव = तत्तत्कार्यगोचरेक्षणात्मकाभिध्यानादेव, [ईक्षितभूताधिष्ठाता सन् तत्तत्कार्यं सृजति, कुतः] तल्लिङ्गात् = तस्य परमात्मनः सर्वनियन्तृत्वरूपलिङ्गस्य 'यः पृथिव्यां तिष्ठन्' (बृह० ३/७/३) इत्यादिना श्रुतत्वात् [अतः भूतानां परमेश्वराधिष्ठितानामेव स्रष्टृत्वप्रतिपादकत्वेनाऽनयोरेकवाक्यत्वात् ] ।

अधिकरणसार

व्योमाद्याः कार्यकर्तारो ब्रह्म वा तदुपाधिकम् ।

व्योम्नो वायुर्वायुतोऽग्निरित्युक्तेः खादिकर्तृता ॥ १ ॥
ईश्वरोऽन्तर्यमयतीत्युक्तेर्व्योमाद्युपाधिकम् ।
ब्रह्म वाय्वादिहेतुः स्यात्तेजआदीक्षणादपि ॥ २ ॥

## ८— विपर्ययाधिकरणम् सू०- १४

**सूत्र- विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥**

पद०— विपर्ययेण, तु, क्रमः, अतः, उपपद्यते, च ।

पदा०- तु = किन्तु, अतः = उत्पत्तिक्रमाद्, विपर्ययेण = विपरीतक्रमेणैव, क्रमः = लयक्रमः, [अस्ति, स्वकारणे कार्याणाम् लय-दर्शनात्] उपपद्यते च = व्युत्क्रमेणैव लयक्रमः सम्भवति च, [अन्यथा सति कार्ये कारणनाशादनिष्टापत्तिः स्यात् ।]

अधिकरणसार

सृष्टिक्रमो लये ज्ञेयो विपरीतक्रमोऽथवा ।
क्लृप्तं कल्प्याद्वरं तेन लये सृष्टिक्रमो भवेत् ॥ १ ॥
हेतावसति कार्यस्य न सत्त्वं युज्यते ततः ।
पृथिव्यप्स्विति चोक्तत्वाद् विपरीतक्रमो लये ॥ २ ॥

## ९- अन्तराविज्ञानाधिकरम् सू०- १५

**सूत्र- अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥**

पद०— अन्तरा, विज्ञानमनसी, क्रमेण, तल्लिङ्गात्, इति, चेत्, न, अविशेषात् ।

पदा०- विज्ञानमनसी = बुद्धीन्द्रियसंशयात्मकान्तःकरणानि [भूतानामात्मनश्च] अन्तरा = अन्तराले, तल्लिङ्गात् = तस्याः सृष्टेः गमकात्, 'एतस्याज्जायते प्राणः' (मु० २/१/३) इत्यादिवाक्यात् अनुक्रम्यन्ते [यथा चात्मनः सकाशात् इन्द्रियबुद्धिमनांसि तेभ्यश्च भूतानीति क्रमेण विरुद्ध्यते] इति चेन्न = इति कथनं नोचितम्, कुतः अविशेषात् = इन्द्रियबुद्धिमनसां भौतिकत्वेन भूतोत्पत्तिक्रमात् इन्द्रियक्रमस्य उत्पत्तिसाम्यात् [येन क्रमेण भूतोत्पत्तिस्तेनैव क्रमेण भौतिकत्वोत्पत्तिरित्यतो न विरुध्यते इत्यर्थः । 'एतस्माज्जायते' इत्यादिश्रुतिस्तु सर्वेषामात्मनः सकाशात् उत्पत्तिमात्रं ब्रूते न क्रमम्— इत्यतः केनापि वाक्येन भूतसृष्टिवाक्यानां न विरोधो भवितुमर्हति]।

अधिकरणसार

किमुक्तक्रमभङ्गोऽस्ति प्राणाद्यैर्नास्ति वास्ति हि ।

प्राणाक्षमनसां ब्रह्मवियतोर्मध्य ईरणात् ।। १ ।।
प्राणाद्या भौतिका भूतेष्वन्भूंताः पृथक् क्रमम् ।
नेच्छन्त्यतो न भङ्गोऽस्ति प्राणादौ न क्रमः श्रुतः ।। २ ।।

## १०—चराचरव्यपाश्रयाधिकरणम् सू०- १६

सूत्र- चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ।।१६।।

पद०— चराचरव्यपाश्रयः, तु, स्यात्, तद् व्यपदेशः, भाक्तः, तद् भाव-भावित्वात् ।

पदा०- तद् व्यपदेशः = तयोः जन्ममरणयोः योऽयं लौकिको व्यपदेशः [सः] चराचरव्यपाश्रयः = स्थावरजङ्गमदेहविषये मुख्यः [जीवे ते] भाक्तः = गौणः, स्यात् = भवेत्, [कुतः] तद् भावभा-वित्वात् = जन्ममरणव्यपदेशस्य देहोत्पत्तिनाशान्वयव्यतिरेका-नुविधायित्वात् [ देहप्रादुर्भावापेक्षयैव जातकर्मादिविधान-मिति न तेन शास्त्रेण जीवनित्यत्वशास्त्रस्य विरोधः] ।

### अधिकरणसार

जीवस्य जन्ममरणे वपुषो वात्मनो हि ते ।

जातो मे पुत्र इत्युक्तेर्जातकर्मादितस्तथा ॥ १ ॥
मुख्ये ते वपुषो भाक्ते जीवस्य ते अवेक्ष्य हि ।
जातकर्म च लोकोक्तिर्जीवापेतेति शास्त्रतः ॥ २ ॥

## ११—आत्माधिकरणम् सू०- १७

### सूत्र- नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

पद०— न, आत्मा, अश्रुतेः, नित्यत्वात्, च, ताभ्यः ।

पदा०- आत्मा = जीवः, न = नोत्पद्यते, [कुतः] अश्रुतेः = उत्पत्ति-प्रकरणे जीवोत्पत्तेरश्रवणात्, ताभ्यः = 'स वा एष महानज आत्मा' (बृह० ४/४/२२) 'अजो नित्य', (कठ० २/१८) इत्यादिश्रुतिभ्यः, नित्यत्वात् = जीवस्य नित्यत्वावगमाच्च ।

अधिकरणसार

कल्पादौ ब्रह्मणो जीवो वियद्वज्जायते न वा ।
सृष्टेः प्रागद्वयत्वोक्तेर्जायते विस्फुलिङ्गवत् ॥ १ ॥
ब्रह्माद्वयं जातबुद्धौ जीवत्वेन विशेत् स्वयम् ।
औपाधिकं जीवजन्म नित्यत्वं वस्तुतः श्रुतम् ॥ २ ॥

## १२—ज्ञाधिकरणम् सू०- १८

## सूत्र- ज्ञोऽत एव ॥ १८ ॥

पद०- ज्ञः, अतः, एव ।

पदा०- [जीवः] ज्ञः = स्वयञ्ज्योतिःस्वरूपः, [कुतः] अत एव = अनुत्पत्तिमत्त्वादेव ।

अधिकरणसार

अचिद्रूपोऽथ चिद्रूपो जीवोऽचिद्रूप इष्यते ।
चिदभावात् सुषुप्त्यादौ जाग्रच्चिन्मनसाकृता ॥ १ ॥
ब्रह्मत्वादेव चिद्रूपश्चित्सुषुप्तौ न लुप्यते ।
द्वैताद्दृष्टिद्वैतलोपान्नहि द्रष्टुरिति श्रुतेः ॥ २ ॥

## १३—उत्क्रान्तिगत्यधिकरणम् सू०- १९-३२

## सूत्र- उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

पदा० [जीवस्य] उत्क्रान्तिगत्यागतीनाम् = 'अस्माच्छरीरादुत्क्रामति' (कौषी०३-४) छा०८/६/५) 'चन्द्रमसमेव ते सर्वे गच्छन्ति' [कौषी०१/२], 'तस्माल्लोकात्पुनरेति' [बृ०४/४/६] इत्युत्क्रमणगमनागमनानां [श्रवणादणुर्जीवः । अतोऽस्ति 'सर्वंव्यापी' [श्वे. ६/११] इति सर्वंगतत्वश्रुतेः 'एषोऽणुरात्मा [मु०३/१/९]

इत्यणुत्वश्रुत्या विरोध इति ।

## सूत्र- स्वात्मना चोत्तरयोः ॥ २० ॥

पद०– स्वात्मना, च, उत्तरयोः ।

पदा०- उत्तरयोः = गत्यागत्योः, स्वात्मना = जीवात्मना सम्बन्धात् [ते आत्मनोऽणुत्वे सम्भवतः] ।

## सूत्र- नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥२१॥

पद०– न, अणुः, अतच्छ्रुतेः, इति, चेत्, न, इतराधिकारात् ।

पदा०- नाणुः = नायं जीवोऽणुपरिमाणः, अतच्छ्रुतेः–'सर्वव्यापी' (श्वे०६/११)इत्यादिना सर्वगतत्वश्रुतेः, इति चेन्न = इति न वक्तव्यम् [कुतः] इतराधिकारात् = इतरस्य ब्रह्मणः सर्ववेदान्तेषु प्रधानतया ज्ञेयत्वेन प्रकृतत्वात् [तस्यैव सर्वगतत्वश्रुतिर्न जीवस्य] ।

## सू०– स्वशब्दोन्मानाभ्याञ्च ॥ २२ ॥

पद०– स्वशब्दोन्मानाभ्याम्, च ।

पदा०- स्वशब्दोन्मानाभ्याम् = 'एषोऽणुरात्मा' (मु०३/१/९) इति अणुत्ववाचकात् शब्दात् 'बालाग्रशतभागस्य' (श्वे० ५/९)

इति अत्यन्तापकृष्टपरिमाणात्, च = जीवोऽणुपरिमाण एव ।

**सू०- अविरोधश्चन्दनवत् ॥ २३ ॥**

पद०- अविरोधः, चन्दनवत् ।

पदा०- चन्दनवत् = यथा चन्दनबिन्दुः शरीरैकदेशस्थः शरीरव्यापि सुखं जनयति, तथा अणुर्जीवोऽपि देहव्यापिनं शैत्याद्युपलम्भं करिष्यतीति, अविरोधः = विरोधाभाव इत्यर्थः ।

**सू०— अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् धृदि हि ॥ २४ ॥**

पद०- अवस्थितिवैशेष्यात्, इति, चेत्, न, अभ्युपगमात् हृदि, हि ।

पदा०- अवस्थितिवैशेष्यात् = चन्दनबिन्दोः प्रत्यक्षेण एकदेशेऽवस्थितिर्दृश्यते जीवस्य तु न एवमिति अतुल्यत्वात् [नात्र चन्दनदृष्टान्तः] इति चेन्न = इति न वक्तव्यम्, कुतः, अभ्युपगमात् = जीवाणुत्वस्य स्वीकारात्, हि-यतः, हृदि = अल्पपरिमाणे हृदि, जीवः पठ्यते 'हृद्यन्तज्योंतिः' [बृ० ४/३/७] इत्यादौ, तस्माज्जीवाणुत्वमभ्युपगम्यते इति न दृष्टान्ते वैषम्यम् ।

**सू०— गुणाद्वा लोकवत् ॥ २५ ॥**

पद०– गुणात्, वा, लोकवत् ।

पदा०- वा = अथवा, लोकवत् = यथा लोके गृहनिष्ठप्रदीपस्याऽल्पत्वेऽपि प्रभारूपगुणवशात् गृहव्यापिप्रकाशादि कार्यं सम्भवति, [तथा] गुणात् = आत्मनोऽणुत्वेऽपि तन्निष्ठज्ञानगुणस्य व्यापकत्वाङ्गीकारात् [व्यापकात् गुणात् व्यापि कार्यं भविष्यति]।

## सूत्र- व्यतिरेको गन्धवत् ॥ २६ ॥

पद०– व्यतिरेकः, गन्धवत् ।

पदा०- गन्धवत् = यथा गुणस्यापि सतो गन्धस्य गुणिव्यतिरेकेण वृत्तिः पुष्पवाटिकापरिसरे पर्यटतः पुंसो गन्धोपलम्भदर्शनात् (तथा) व्यतिरेकः = आत्मगुणस्य ज्ञानस्य गुणिविश्लेषः भवितुमर्हति ।

## सूत्र- तथा च दर्शयति ॥ २७ ॥

पद०– तथा, च, दर्शयति ।

पदा०- च = अपि 'आलोमभ्य आनखाग्रेभ्य (छा०८/८/१) इत्यादि श्रुतिः, तथा = आत्मनो ज्ञानेन समस्तशरीरव्यापित्वम्, दर्शयति = प्रतिपादयति ।

## सू०— पृथगुपदेशात् ॥ २८ ॥

पद०— पृथक्, उपदेशात् ।

पदा०- 'प्रज्ञया शरीर समारुह्य' (कौषी०३/६) इत्यादिश्रुत्या आत्मज्ञानयोः कर्तृकरणभावेन, पृथक् = भेदेन, उपदेशात् = कथनात्, [गुणद्वाराऽस्य शरीरव्यापित्वं गम्यते] ।

## सू०-तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

पद०— तद्गुणसारत्वात्, तु, तद्व्यपदेशः. प्राज्ञवत् ।

पदा०- तु = किन्तु, तद्गुणसारत्वात = तस्या बुद्धेःगुणा अणुत्वोत्क्रान्तिगत्यागतिसुखदुःखादयः ते सारं प्रधानं यस्य [जीवस्य] स तद्गुणसारस्तस्य भावस्तत्त्वं तस्मात् । तद्व्यपदेशः = अणुत्वादिव्यपदेशः [न स्वाभाविकः] प्राज्ञवत् = यथा प्राज्ञस्य ]परमात्मनः] सगुणोपासनेषु दहराद्युपाधिवशादणुत्वादिकं व्यपदिश्यते तद्वत् ।

## सू०-यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

पद०— यावदात्मभावित्वात्, च, न, दोषः, तद्दर्शनात् ।

पदा०- [बुद्धिसंयोगस्य] यावदात्मभावित्वात् = यावत् आत्मनः सम्य-

ग्दर्शनेन संसारो न निवर्तते, तावद् भावित्वात्, न दोषः = नोक्तदोषः [कुतः] तद्दर्शनात् = देहवियोगेऽपि तस्य बुद्धिसंयोगस्य 'समानः सन्नुभौ लोकावनुसंचरति' (बृ० ४/३/७) इत्यादिश्रुतौ दर्शनात् ।

**सू०-पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्॥३१॥**

पद०– पुंस्त्वादिवत्, तु, अस्य, सतः, अभिव्यक्तियोगात् ।

पदा०- पुंस्त्वादिवत् = यथा बाल्ये पुंस्त्वादेः सत एव यौवने अभिव्यक्तिः तद्वत्, अस्य = बुद्धिसंयोगस्य, सतः = सुषुप्तौ सूक्ष्मात्मना वर्तमानस्यैव, अभिव्यक्तियोगात् = अभिव्यक्तिसंभवात् [यावदात्मभावित्वं न विरुद्ध्यते ] ।

**सू०- नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥**

पद०– नित्योलब्ध्यनुपलब्धिप्रसङ्गः, अन्यतरनियमः, वा, अन्यथा ।

पदा०-[अन्तःकरणमवश्यमभ्युपगन्तव्यम्] अन्यथा = अन्तःकरणानभ्युपगमे, नित्योपलब्ध्यनुपलब्धिप्रसङ्गः = सर्वेषामिन्द्रियाणां स्वस्वविषयसन्निधानदशायां युगपत् सर्वविषयोपलब्धिप्रसङ्गः, मनोव्यतिरिक्तज्ञानसामग्र्याः सत्त्वात्, यदि सत्यामपि

सामग्र्यां ज्ञानाभावस्तदा नित्यमनुपलब्धिप्रसङ्गः;वा = अथवा [एकस्योपलब्धिमितरेषामनुपलब्धिमिच्छता] [ज्ञानसामग्री-मध्ये] अन्यतरनियमः = अन्यतरस्य-आत्मन इन्द्रियस्य वा नियमः शक्तिप्रतिबन्धः [अङ्गीकार्यः], स न सम्भवति, निर्धर्मे आत्मनि शक्तेरभावात् । नापि इन्द्रियस्य शक्तिः आन्तरत्वेन तद्धर्मत्वायोगात् । तस्माद् व्यासङ्गस्थले इच्छैव नियामिका । तस्याश्च मनोधर्मत्वेन, तदन्यथानुपपत्त्या 'कामः सङ्कल्पः' (बृ० १/५/३) इत्यादिश्रुत्या च सिद्ध-मन्तःकरणम्, तत्प्रयुक्तश्चात्मनि अणुत्वादिव्यवहार इति, तस्मादौपाधिकाणुत्वश्रुत्या न वास्तविकसर्वगतत्वश्रुतेर्विरोध इति सिद्धम् ।

### अधिकरणसार

जीवोऽणुः सर्वगो वा स्यादेषोऽणुरिति वाक्यतः ।
उत्क्रान्तिगत्यागमनश्रवणाच्चाणुरेव सः ॥ १ ॥

साभासबुद्ध्याऽणुत्वे तदुपाधित्वतोऽणुता ।
जीवस्य सर्वगत्वं तु स्वतो ब्रह्मत्वतः श्रुतम् ॥ २ ॥

## १४– कर्त्रधिकरणम् सू०- ३३-३९

### सूत्र– कर्त्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

पद०– कर्त्ता, शास्त्रार्थवत्त्वात् ।

पदा०– कर्त्ता = आत्मैव कर्ता न तु बुद्धिः [कुतः] शास्त्रर्थवत्त्वात् = कर्तृरपेक्षितोपायबोधकविधिशास्त्रस्य सार्थकत्वात् । [यदि बुद्धिः कर्त्री फलभोक्ता च आत्मा इति उच्येत, तर्हि तादृशविधिशास्त्रमनर्थकमापद्येत । अतः न केवलं बुद्धेः कर्तृत्वम् अपितु आत्मन इति] ।

### सूत्र–विहारोपदेशात् ॥ ३४ ॥

पदा०– विहारोपदेशात् = 'स्वे शरीरे यथाकामं परिवर्तते [बृ०- २-१-१८] इति जीवप्रकरणे स्वप्नावस्थायां सञ्चरणोपदेशात्[अकर्तुः सञ्चरणायोगात् आत्मनः कर्तृत्वम्] ।

### सू०- उपादानात् ॥ ३५ ॥

पदा०–उपादानात् = 'प्राणानां विज्ञानेन विज्ञानमादाय' [बृ०- २/१/१७] इति आत्मनः इन्द्रियशक्तिग्रहणश्रवणात् [अकर्तुरुपादानायोगात् आत्मनः कर्तृत्वम्] ।

**सू०-व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः॥३६॥**

पद०— व्यपदेशात्, च, क्रियायाम्, न, चेत्, निर्देशविपर्ययः ।

पदा०- च = अपि, क्रियायाम् = 'विज्ञानं यज्ञं तनुते' [तै०२/५/१] इत्यादौ लौकिकवैदिकक्रियायाम्, व्यपदेशात् = विज्ञानशब्द-वाच्यस्य आत्मनः कर्तृत्वव्यपदेशात्, न चेत् = यदि विज्ञान-शब्दो बुद्धिपरो जीवपरो न चेत्, [तर्हि] निर्देशविपर्ययः = बुद्धेः करणत्वेन विज्ञानमिति कर्तृत्वनिर्देशस्य विज्ञानेनेति-करणत्वविपर्ययः स्यात् ।

**सूत्र- उपलब्धिवदनियमः ॥ ३७ ॥**

पद०— उपलब्धिवत्, अनियमः ।

पदा०- उपलब्धिवत् = यथा उपलब्धौ स्वतन्त्रोऽप्यात्मा इष्टम् अनिष्टं चोपलभते तथा, अनियमः = इष्टम् अनिष्टं च सम्पादयतीति अनियमः ।

**सूत्र- शक्तिविपर्ययात् ॥ ३८ ॥**

पदा०-शक्तिविपर्ययात् = बुद्धेःकर्तृत्वे करणशक्तिविपर्ययात्, [करण-शक्तिः हीयेत, अतः आत्मनः कर्तृत्वं सिद्धम्, यदि बुद्धेः कर्तृ-

त्वमभ्युपगम्यते तर्हि करणान्तरमवश्यं स्वीकार्यं स्यात् इत्यनर्थान्तरम्] ।

## सूत्र- समाध्यभावाच्च ॥ ३९ ॥

पद०- समाध्यभावात्, च ।

पदा०-च = अपि, समाध्यभावात् = आत्मनोऽकर्तृत्वे 'आत्मा वा अरे द्रष्टव्यः' (बृह० २/४/५) इत्यादौ विहितस्य ब्रह्मसाक्षात्कार-साधनस्य समाधेः अभावप्रसङ्गात् [आत्मनः कर्तृत्व-सिद्धिः] ।

अधिकरणसार

जीवोऽकर्ताऽथवा कर्ता धियः कर्तृत्वसम्भवात् ।
जीवे कर्तृतया किं स्यादित्याहुः सांख्यमानिनः ॥ १ ॥

करणत्वान्न धीः कर्त्री यागश्रवणलौकिकाः ।
व्यापारा न विना कर्त्रा तस्माज्जीवस्य कर्तृता ॥ २ ॥

## १५—तक्षाधिकरम् [सू० ४०]

## सूत्र- यथा च तक्षोभयथा ॥ ४० ॥

पद०- यथा, च, तक्षा, उभयथा ।

पदा०- च = अपि,यथा = येन प्रकारेण, तक्षा = काष्ठतृट्,अभयथा = करणानि अपेक्ष्य कर्ता सन् दुःखी भवति,अनपेक्ष्य तु स्वरूपेण अकर्ता सुखी भवति [तथा आत्मापि बुद्ध्यादिकरणान्यपेक्ष्य कर्ता संसरति अनपेक्ष्य तु स्वभावतोऽकर्ता परमानन्दघन एव भवति। विधिशास्त्रं हि कर्तृत्वं विना अनुपपन्नं सत् तत् साधयति, न तु तस्य स्वाभाविकत्वमपीति न तेनासङ्गत्वश्रुते-विरोध इति सिद्धम्] ।

अधिकरणसारः

कर्तृत्वं वास्तवं किं वा कल्पितं वास्तवं भवेत् ।
यजेतेत्यादिशास्त्रेण सिद्धस्याऽबाधितत्वतः ॥ १ ॥

असङ्गोहीति तद्बाधात् स्फटिके रक्ततेव तत् ।
अध्यस्तं धीचक्षुरादि करणोपाधिसन्निधेः ॥ २ ॥

## १६- परायत्ताधिकरणम् [सू० ४१-४२]

## सूत्र- परात्तु तच्छ्रुतेः ॥ ४१ ॥

पद०- परात्, तु, तच्छ्रुतेः ।

पदा०- [न स्वतो जीवस्य कर्तृत्वादिसिद्धिः]तु = किन्तु, परात् =

परस्मात् ईश्वरात् कर्माध्यक्षात्, [अविद्यातिमिरान्धस्य कर्तृत्वादिसंसारसिद्धिः तदनुग्रहे तु विज्ञानेन मोक्षसिद्धिर्भविष्यति, कुतः] तच्छ्रुतेः = 'एष ह्येव साधु कर्म कारयति' (कौषी ३-८) इत्यादिकायाः श्रुतेः [ईश्वरस्य कर्तृत्वमवसीयते] ।

## सूत्र-कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

पद०- कृतप्रयत्नापेक्षः, तु, विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ।

पदा०- तुः उक्तपूर्वपक्षनिरासार्थकः, कृतप्रयत्नापेक्षः = जीवेन कृतो यः प्रयत्नः = धर्माधर्मरूपः तदपेक्षश्च एवेश्वरोऽन्यस्मिन् जन्मन्यपि धर्मादिकं कारयति, तदपेक्षश्च सुखादिरूपं फलं प्रयच्छति [इति न वैषम्यनैर्घृण्ये ईश्वरस्य प्रसज्येते । संसारस्याऽनादित्वात् पूर्वजन्मकृतधर्माद्यपेक्षा युक्तैव । ननु कस्मात् तदपेक्षत्वम् अत आह] विहितप्रतिषिद्धावैयर्थ्यादिभ्यः = ईश्वरस्य कर्मापेक्षत्वे 'ज्योतिष्टोमेन यजेत' ब्राह्मणो न हन्तव्यः' इति द्वयोः विहितप्रतिषिद्धयोः सार्थक्यं भवति, अन्यथा विधिनिषेधशास्त्रं निरर्थकमेव स्यात् [एवञ्च ईश्वराधीनकर्तृत्वप्रतिपादकविद्यादि-

शास्त्रेण 'एष ह्येव साधु कर्म' इत्यादिशास्त्रस्य न विरोधः]।

अधिकरणसार

प्रवर्तकोऽस्य रागादिरीशो वा रागतः कृषौ ।
दृष्टा प्रवृत्तिर्वैषम्यमीशस्य प्रेरणे भवेत् ॥ १ ॥
सस्येषु वृष्टिवज्जीवेष्वीशस्याविषमत्वतः ।
रागोऽन्तर्याम्यधीनोऽत्र ईश्वरोऽस्य प्रवर्तकः ॥ २ ॥

## १७- अंशाधिकरणम् (सू० ४३-५३)

**सूत्र–अंशो नानाव्यपदेशादन्यथा चापि दाशकित-वादित्वमधीयत एके ॥ ४३ ॥**

पद०–अंशः, नानाव्यपदेशात्, अन्यथा, च, अपि, दाशकितवादित्वम्, अधीयते, एके ।

पदा०- [जीव ईश्वरस्य]अंशः, = अंश इवांशः,न तु स्वाभाविकोंऽशः [तस्य 'निष्कलम्'(श्वेता०६/१९) इत्यादिना निरंशत्वश्रवणात् अतः कल्पितांशो जीवः । कुतः पुनर्जीवेश्वरयोरंशांशिभावः, 'य आत्मनि तिष्ठन्'[श० प० १४/५/३०] इत्यादिना तयोः]नानाव्यपदेशात् = नानात्वस्य व्यपदेशात्,अन्यथा चापि

= अनानात्वस्यापि व्यपदेशात् । [तथाहि] एके = आथर्वणिकाः [ब्रह्मदाशा ब्रह्मदासा ब्रह्मैवेमे कितवाः, इति] दाशकितवादित्वम् = ब्रह्मण एव दाशत्वं दासत्वं कितवत्वञ्च, अधीयते = पठन्ति, [तत्र भेदवादिश्रुतिजातस्य प्रत्यक्षसिद्धभेदानुवादेनाऽभेदपरत्वात् कल्पितभेदवानंशो जीव इति सिद्धम् ।

## सूत्र- मन्त्रवर्णाच्च ॥ ४४ ॥

पद०- मन्त्रवर्णात्, च ।

पदा०- च = अपि, मन्त्रवर्णात् = 'पादोऽस्य विश्वा भूतानि' (छा०-३-१२-६) इति श्रुतेः [परमेश्वरस्याविद्याकल्पितांशो भूतशब्द वाच्यो जीव इति गम्यते] ।

## सू०- अपि च स्मर्यंते ॥ ४५ ॥

पद०- अपि, च, स्मर्यंते ।

पदा०- अपि = किञ्च, 'ममैवांशो जीवलोके जीवभूतः सनातनः' (भ० गी० १५/७) इति भगवद्गीतासु परमेश्वरस्य अविद्याकल्पितांशो जीव इति स्मर्यंते ।

## सूत्र- प्रकाशादिवन्नैवं परः ॥ ४६ ॥

पद०— प्रकाशादिवत्, न, एवम्, परः ।

पदा०- [यथा जीवोऽविद्यावेशवशात् देहाद्यात्मभावमिव गतस्तत्कृतेन दुःखेन दुःखी अहम् इति मन्यते] नैवं परः = ईश्वर एवं न, प्रकाशादिवत् = यथा सौरश्चन्द्रामसो वा प्रकाशो नभो व्याप्य वर्तमानो वक्रकाष्ठाद्युपाधिकृतवक्रभावमिवापन्नोऽपि न वस्तुतः वक्रभावमापद्यते तद्वत् [जीवोऽपि न परमार्थतो दुःखित्वमभिमन्यते] ।

## सूत्र- स्मरन्ति च ॥ ४७ ॥

पद०— स्मरन्ति, च ।

पदा०- च = अपि, स्मरन्ति = 'तत्र यः परमात्माऽसौ स नित्यो निर्गुणश्च' स्मृतः । 'न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा' इत्यादिना व्यासादय ईश्वरस्य सांसारिकदुःखास्पर्शित्वं प्रतिपादयन्ति ।

## सू०-अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥४८॥

पद०— अनुज्ञापरिहारौ, देहसम्बन्धात्, ज्योतिरादिवत् ।

पदा०- अनुज्ञापरिहारौ = 'मित्रं सेव्यम्', शत्रवः परिहर्तव्याः इति विधिनिषेधौ [सर्वत्रात्मनोऽखण्डैकरसत्वेऽपि] देहसम्बन्धात्

= देहतादात्म्यसम्बन्धात् संगच्छेते, ज्योतिरादिवत् = यथा अग्नेरेकत्वेऽपि श्मशानसम्बन्ध्यग्निः परिहर्तव्यः भवति नेतरः तद्वदात्मापि ।

## सूत्र- असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

पद०- असन्ततेः, च, अव्यतिकरः ।

पदा०- च = अपि, अव्यतिकरः = कर्मफलसंबन्धस्य असङ्करः स्यात्, (कुतः) असन्ततेः = उपाधिपरिच्छिन्नस्य आत्मनः सर्वैःशरीरैः सहासम्बन्धात् ।

## सू०—आभास एव च ॥ ५० ॥

पद०- आभासः, एव, च ।

पदा०- च = किञ्च, आभास एव = एष जीवः परस्यात्मनः प्रतिबिम्ब एव (सूर्यप्रतिबिम्बवत् ततश्च यथैकस्मिन् सूर्यप्रतिबिम्बे कम्पमाने न प्रतिबिम्बान्तरं कम्पते, तथैकस्मिन् जीवे कर्मफलसम्बन्धिनि सति न जीवान्तरस्य तत्सम्बन्ध इति सङ्करः सुपरिहरः) ।

## सूत्र- अदृष्टानियमात् ॥ ५१ ॥

पदा०— अदृष्टानियमात् = सांख्यमते प्रधानसमवेतस्यादृष्टस्य सर्वात्मसाधारणत्वात् [स दोषस्तदवस्थः]न्यायमतेऽपि अदृष्टहेतुमनःसंयोगस्य सर्वात्मसाधारणतया इदमस्याऽदृष्टम्, इदमस्येत्येवंरूपस्यादृष्टनियमस्याभावात् फलानियमः ।

**सू०- अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥**

पद०- अभिसन्ध्यादिषु, अपि, च, एवम् ।

पदा०- अभिसन्ध्यादिष्वपि = साधारणमनः संयोगसध्येषु संकल्पादिष्वपि, चैवम् = अदृष्टनियमहेतुत्वाभावः [इत्युक्तदोषस्तदवस्थः] ।

**सूत्र- प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥**

पद०— प्रदेशात्, इति, चेत्, न, अन्तर्भावात् ।

पदा०- प्रदेशात् = आत्मनां विभुत्वेऽपि यादृशयादृशशरीरावच्छिन्ने आत्मप्रदेशे मनःसंयोगस्तादृशात्मप्रदेशात् (अभिसन्ध्यादिनियमः स्यात्)इति चेन्न, अन्तर्भावात् = सर्वेषामात्मनां विभुत्वाविशेषात् कृत्स्नशरीरेष्वन्तर्भावात् [अस्यं तच्छरीरमिति नियमाभावेन पूर्वोक्तदोषप्रसङ्गस्तदवस्थ एव] ।

## अधिकरणसार

किं जीवेश्वरसाङ्कर्यं व्यवस्था वा श्रुतिद्वयात् ।
अभेदभेदविषयात् साङ्कर्यं न निवार्यते ॥ १ ॥
अंशोऽवच्छिन्न आभास इत्यौपाधिककल्पनैः ।
जीवेशयोर्व्यवस्था स्याज्जीवानां च परस्परम् ॥ २ ॥

॥ इति द्वितीयाध्यायस्य तृतीयः पादः ॥



# ब्रह्मसूत्र- द्वितीयाध्याय- चतुर्थः पादः

[अत्र पादे लिङ्गशरीरश्रुतीनां विरोधपरिहारः]

## १– प्राणोत्पत्त्यधिकरणम् सू० १–४

### सू०- तथा प्राणाः ॥ १ ॥

पद०– तथा, प्राणाः ।

पदा०- तथा = 'एतस्माज्जायते' (मु०२/१/३) इत्यादिश्रुतिवाक्यस्थाकाशादिवत्, प्राणाः = इन्द्रियाणि जायन्ते [उत्पत्तिप्रतिपादिकायाः श्रुतेः सामान्यादित्यर्थः] ।

### सू०—गौण्यसम्भवात् ॥ २ ॥

पदा०– गौण्या = उत्पत्तिप्रतिपादकश्रुतेरसम्भवस्तस्मात्, [कुत्रचन प्रदेशे सृष्टेः पूर्वस्मिन् काले इन्द्रियसद्भावश्रवणेन गौणी प्राणोत्पत्तिश्रुतिरिति न वाच्यम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः भङ्गप्रसङ्गेन तस्या असम्भवादित्यभिसन्धिः] ।

### सू०— तत्प्राक् श्रुतेश्च ॥ ३ ॥

पद०– तत्प्राक्, श्रुतेः, च ।

पदा०- तत्प्राक्श्रुतेः = तस्य 'जायते' इति जन्मवाचिपदस्याकाशादिषु

मुख्यस्य पाठापेक्षया प्राचीनेषु प्राणादिषु, श्रुतेः = श्रवणात् [इन्द्रियोत्पत्तिर्मुख्या] ।

## सूत्र- तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

पद०– तत्पूर्वकत्वात्, वाचः ।

पदा०- वाचः = 'अन्नमयं हि सोम्य ! मन आपोमयः प्राणस्तेजोमयी वाग्'(छा० ६/५/४)इति मनःप्राणसहिताया वाचः तत्पूर्वकत्वात् = ब्रह्मप्रकृतिकतेजोऽबन्नपूर्वकत्वाभिधानात् [ अस्ति प्राणोत्पत्तिश्रुतिः ] ।

### अधिकरणसार

किमिन्द्रियाण्यनादीनि सृज्यन्ते वा परात्मना ।
सृष्टेः प्रागृषिनाम्नैषां सद्भावोक्तेरनादिता ॥ १ ॥
एकबुद्ध्या सर्वबुद्धेर्भौतिकत्वाज्जनिश्रुतेः ।
उत्पद्यन्तेऽथ सद्भावः प्रागवान्तरसृष्टितः ॥ २ ॥

## २—सप्तगत्यधिकरणम् सू० ५-६

## सूत्र- सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

पद०– सप्त, गतेः, विशेषितत्वात्, च, ।

पदा०—सप्त = सप्तसंख्यकानि [इन्द्रियाणि, कुतः] गतेः श्रुत्या सप्तत्वावगतेः, विशेषितत्वात् = 'सप्त वैशीर्षण्याः' (तै०सं०५/१/७/१) इति शास्त्रेण प्राणानां शीर्षण्यत्वेन विशेषितत्वात्, च ।

## सू०—हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

पद०—हस्तादयः, तु, स्थिते, अतः, न, एवम् ।

पदा०—तुशब्दः पूर्वमतनिरासार्थः, हस्तादयः = करादयः [अपि, 'हस्तो वै ग्रह' (बृ० ३/२/८) इत्यादिश्रुत्या अतिरिक्तेन्द्रियत्वेन श्रूयन्ते ] स्थिते = सप्तत्वसंख्यायामसम्भावितान्तर्भावे सप्तत्वातिरेके स्थिते, [सप्तत्वसंख्या एकादशसंख्यायामन्तर्भावयितुं शक्यते] अतः = अस्मात्, न एवम् = न तथा [मन्तव्यम् सप्तैव प्राणा इति ।

अधिकरणसार

सप्तैकादश वाऽक्षाणि सप्त प्राणा इति श्रुतेः ।
सप्तस्यु मूर्धनिष्ठेषु छिद्रेषु च विशेषणात् ॥ १ ॥
अशीर्षण्यस्य हस्तादेरपि वेदे समीरणात् ।
ज्ञेयान्येकादशाक्षाणि तत्तत्कार्यानुसारतः ॥ २ ॥

## ३— प्राणाणुत्वाधिकरणम् सू० ७

### सू०- अणवश्च ॥ ७ ॥

पद०— अणव:, च ।

पदा०- [पूर्वोक्ताः प्राणाः] च, अणवः = परिच्छिन्नपरिमाणाः [सूक्ष्माश्च सन्ति, इन्द्रियाग्राह्यत्वात्] ।

अधिकरणसार

व्यापीन्यणूनि वाऽक्षाणि सांख्या व्यापित्वमूचिरे ।
वृत्तिलाभस्तत्र तत्र देहे कर्मवशाद् भवेत् ॥ १ ॥
देहस्थवृत्तिमद्भागेष्वेवाक्षत्वं समाप्यताम् ।
उत्क्रान्त्यादिश्रुतेस्तानि ह्यणूनि स्युरदर्शनात् ॥ २ ॥

## ४- प्राणश्रैष्ठ्याधिकरणम् सू०- ८

### सू०- श्रेष्ठश्च ॥ ८ ॥

पद०— श्रेष्ठः, च ।

पदा०-श्रेष्ठः = मुख्यः प्राणः, च = अपि, [इन्द्रियवत् ब्रह्मणो जायते]

अधिकरणसार

मुख्यःप्राणःस्यादनादिर्जायते वा न जायते ।
आनीदिति प्राणचेष्टा प्राक् सृष्टेः श्रूयते यतः ॥ १ ॥
आनीदिति ब्रह्मसत्त्वं प्रोक्तं वातनिषेधनात् ।
एतस्माज्जायते प्राणः इत्युक्तेरेष जायते ॥ २ ॥

## ५- वायुक्रियाधिकरणम् सू० ९-१२

### सूत्र- न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

पद०- न वायुक्रिये पृथगुपदेशात् ।

पदा०- न वायुक्रिये = मुख्यः प्राणः न वायुः, नापि क्रिया = इन्द्रिय व्यापारः [किन्तु वायुविशेष एव, कुतः] पृथगुपदेशात् = 'स वायुना ज्योतिषा' (छा. ३/१८/४) इत्यादिना वायोः प्राणस्य च पृथक् उपदेशात्, तथा 'एतस्माज्जायते प्राणः (मु. २/१/३) इति श्रुत्या च इन्द्रियेभ्यः पृथगुपदेशात् [नहीन्द्रियव्यापारस्य सतः इन्द्रियेभ्यः पृथगुपदेशो युज्यते, तस्माद् वायुविशेषोऽध्यात्मभावापन्नः पञ्चवृत्तिप्राणः] ।

### सूत्र- चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

पद०— चक्षुरादिवत्, तु, तत्सहशिष्ट्यादिभ्यः ।

पदा०- तुशब्दः उक्तशङ्कानिरासार्थः । [प्राणो न जीववत्स्वतन्त्रः किन्तु] चक्षुरादिवत् = यथा चक्षुरादीनि इन्द्रियाणि करणत्वेन परतन्त्राणि तद्वत् [अयमपि प्राणः पराधीन एव, कुतः] प्राण-संवादप्रकरणे तैः चक्षुरादिभिः सहास्य शिष्टेः = अनुशासनात् तदादिभ्यः = अचेतनत्वादिभ्यो हेतुभ्यः ।

**सू०-अकरणत्वाच्च न दोषस्तथाहि दर्शयति॥११॥**

पद०— अकरणत्वात्, च, न, दोषः, तथा, हि, दर्शयति ।

पदा०- अकरणत्वात् = प्राणस्य ज्ञानकरणत्वरहितत्वात्, न च दोषः = चक्षुरादिवद्विषयान्तरप्रसङ्गलक्षणदोषो न [भवति, न च तावता प्राणस्य कार्याभाव इति शंक्यम्] हि = यतः, तथा = शरीरेन्द्रियस्थितिलक्षणं कार्यम् 'तान् वरिष्ठः प्राण उवाच' (प्रश्नो २/३) इत्यादिश्रुतिः दर्शयति = प्रतिपादयति ।

**सू०—पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥**

पद०— पञ्चवृत्तिः मनोवत्, व्यपदिश्यते ।

पदा०- मनोवत् = यथा मनसः श्रोत्रादिनिमित्ताः शब्दादिविषयाः

पञ्चवृत्तयः तद्वत् [प्राणोऽपि] पञ्चवृत्तिः = प्राणादिपञ्चवृत्तिः ['प्राणोऽपानो' (बृ० १/५/३) इत्यादिश्रुतिषु] व्यपदिश्यते = उपदिश्यते ।

अधिकरणसार

वायुर्वाक्षक्रिया वाऽन्यो वा प्राणः श्रुतितोऽनिलः ।
सामान्येन्द्रियवृत्तिर्वा सांख्यैरेवमुदीरणात् ॥ १ ॥

भाति प्राणो वायुनेति भेदोक्तेरेकताश्रुतिः ।
वायुजत्वेन सामान्यवृत्तिर्नाक्षेष्वतोऽन्यता ॥ २ ॥

## ६– श्रेष्ठाणुत्वाधिकरणम् सू०- १३

## सूत्र- अणुश्च ॥ १३ ॥

पद०– अणुः, च ।

पदा०- (पूर्वोक्तो मुख्यः प्राणः) अणुः = परिच्छिन्नः, च = अपि, सूक्ष्म इत्यर्थः ।

अधिकरणसार

प्राणोऽयं विभुरल्पो वा विभुः स्यात् प्लुष्युपक्रमे ।
हिरण्यगर्भपर्यन्ते सर्वदेहे समोक्तितः ॥ १ ॥

समष्टिव्यष्टिरूपेण विभुरेवाधिदैविकः ।
आध्यात्मिकोऽल्पः प्राणः स्याददृश्यश्च यथेन्द्रियम् ॥ २ ॥

## ७—ज्योतिराद्यधिकरणम् सू० १४—१६

### सूत्र-ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

पद०— ज्योतिराद्यधिष्ठानम्, तु, तदामननात् ।

पदा०—ज्योतिराद्यधिष्ठानम् = ज्योतिरादिभिः—आदित्यादिदेवताभिः अधिष्ठीयते—प्रेर्यते इति, आदित्यादिदेवताधिष्ठितमेव [चक्षुरादीन्द्रियजातं चेष्टते,कुतः]तदामननात् = तस्य देवताधिष्ठितत्वस्य 'आदित्यश्चक्षु'(ऐत०१-२-४) इत्यादिश्रुत्याऽभिधानात् ।

### सूत्र- प्राणवता शब्दात् ॥ १५ ॥

पद०— प्राणवता, शब्दात् ।

पदा०- प्राणवता = जीवेन [सह इन्द्रियाणाम् स्वस्वामिभावसम्बन्धो वर्तते, अतश्चेन्द्रियसाध्यभोगभागित्वं जीवस्यैव, नेन्द्रियाधिष्ठातृदेवतानाम् कुतः ?] शब्दात् = 'स चाक्षुषः पुरुषो दर्शनाय चक्षुः' (छा० ८/१२/४) इत्यादिश्रुतेः ।

## सू०- तस्य च नित्यत्वात् ॥ १६ ॥

पद०– तस्य, च, नित्यत्वात् ।

पदा०- च = अपि, तस्य = जीवस्य, [स्वधर्मार्जिते काये कर्तृत्वेन भोक्तृत्वेन च] नित्यत्वात् = सदातनत्वात् [नास्मिन् शरीरे देवतानां भोक्तृत्वम्] ।

### अधिकरणसार

स्वतन्त्रा देवतन्त्रा वा वागाद्याः स्युः स्वतन्त्रता ।
नोचेद्वागादिजो भोगो देवानां स्यान्न चाऽऽत्मनः ॥ १ ॥

श्रुतमग्न्यादि तन्त्रत्वं भोगोऽग्न्यादेस्तु नोचितः ।
देवदेहेषु सिद्धत्वाज्जीवो भुङ्क्ते स्वकर्मणा ॥ २ ॥

## ८— इन्द्रियाधिकरणम् सू०-१७-१९

## सू०-त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्॥१७॥

पद०– ते, इन्द्रियाणि, तद् व्यपदेशात्, अन्यत्र, श्रेष्ठात् ।

पदा०- श्रेष्ठात् = मुख्यात्प्राणात्, अन्यत्र = अन्ये [अपि प्रकृताः] ते = वागादयः, इन्द्रियाणि = इन्द्रियशब्दवाच्यानीत्युच्यन्ते [न प्राणः, कुतः ?] 'एतस्माज्जायते प्राणः' इत्यादिषु प्राणस्य इन्द्रियेभ्यो

भेदेन व्यपदेशात् ।

## सू०- भेदश्रुतेः ॥ १८ ॥

पदा० [वागादीन्द्रियप्रकरणमुपसंहृत्य 'अथहेममासन्य' प्राणमूचुः (वृ०-१-३-२) इतिभिन्न प्रकरणे] भेदश्रुतेः = प्राणस्य इन्द्रियेभ्यो भेदेन श्रवणात् [न प्राणव्यापारत्वमिन्द्रियाणाम्, किन्तु तत्त्वान्तर त्वमित्यर्थः] ।

## सूत्र- वैलक्षण्याच्च ॥ १९ ॥

पद०- वैलक्षण्यात् च ।

पदा०- च = अपि, वैलक्षण्यात् = सुषुप्तौ प्राणस्यस्थितिर्नेन्द्रियाणा-मित्यादिरूपात् वैलक्षण्यात् [तत्त्वान्तरत्वमिन्द्रियाणामिति-भावः] ।

### अधिकरणसार

प्राणस्यवृत्तयोऽक्षाणि प्राणात्तत्त्वान्तराणि वा ।
तद्रूपत्वश्रुतेः प्राणनाम्नोक्तत्वाच्च वृत्तयः ॥ १ ॥

श्रमाश्रमादिभेदोक्तेर्गौणे तद्रूपनामनी ।
आलोचकत्वेनान्यानि प्राणो नेताऽक्षदेहयोः ॥ २ ॥

## ९–संज्ञामूर्तिक्लृप्त्यधिकरणम् सू० २०-२२

**सू०-संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥२०॥**

पद०–संज्ञामूर्तिक्लृप्तिः, तु, त्रिवृत्कुर्वतः, उपदेशात् ।

पदा०–तु शब्दस्त्वत्र सूत्रे वादिसिद्धान्तभञ्जनप्रयोजनकः । त्रिवृत्कुर्वतः = 'तासांत्रिवृतत्रिवृतमेकैकां करवाणि,' (छा० ६/३/२) इतित्रिवृत्कुर्वतः परमेश्वरस्य [एवं] संज्ञामूर्तिक्लृप्तिः = नामरूपयोर्व्याक्रिया–पृथक् करणम् [न जीवस्याल्पमेधसोमहीधरादिव्याकरणासमर्थस्य, कुतः ?] उपदेशात् = 'सेयं देवता' (छा० ६/३/२) इत्युपक्रम्य 'व्याकरवाणि' इत्युपसंहारे परदेवता कर्तृकस्य व्याकरणस्य शासनात् ।

**सू०- मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१॥**

पद०– मांसादि, भौमम्, यथाशब्दम्, इतरयोः, च ।

पदा०– [मांसादीत्यत्रादिशब्दः 'अन्नमशितंत्रेधाभवति' (छा०६/५/१) इति श्रुत्यापुरीषमनसोरुपलक्षकस्तथाच] मांसादि = मांसपुरीषप्रभृत्ति, भौमम् = त्रिवृत्कृताया अन्नात्मिकाया भूमेः कार्यम् । [एवम्, इतरयोश्च = अप्तेजसोरपि, यथा शब्दम् = मूत्रं लोहितं

प्राणश्चापां कार्यम्' 'अस्थि मज्जा वाक् तेजसः' कार्यं बोध्यम् ] ।

## सू०- वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

पद०- वैशेष्यात्, तु, तद्वादः, तद्वादः ।

पदा०- तु शब्दउपरोक्त शंकाविनाशाय ।[सर्वेषां पृथव्यादीनां त्रिवृत्करणाविशेऽपि] वैशेष्यात् = स्वभागस्य प्रचुरत्वात्, तद्वादः = पृथव्यादि शब्देन प्रसिद्धिः- व्यवहारः । द्वितीयस्तद्वाद-शब्दोऽध्यायस्य परिसमाप्ति सूचकः ।

### अधिकरणसार

नाम रूप व्याकरणे जीवः कर्ताऽथवेश्वरः ।
अनेन जीवेनेत्युक्तेर्व्याकर्ता जीव इष्यते ॥ १ ॥

जीवान्वयः प्रवेशेन संनिधेः सर्वसर्जने ।
जीवोऽशक्तः शक्त ईश उत्तमोक्तिस्त्वयेक्षितुः ॥ २ ॥

॥ इति द्वितीयध्याये चतुर्थः पादः ॥

# ब्रह्मसूत्र-तृतीयोऽध्यायः- प्रथमः पादः

[तृतीये साधनाख्याध्याये प्रथमपादेगत्यागतिचिन्तावैराग्यनिरूपण-चिन्ताच]

## १- तदन्तरप्रतिपत्त्यधिकरणम् सू०-१–७

**सू०- तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

पद०– तदन्तरप्रतिपत्तौरंहति, संपरिष्वक्तः, प्रश्ननिरूपणाभ्याम् ।

पदा०- तदन्तरप्रतिपत्तौ = देहान्तरप्राप्तौ, [भावि शरीरारम्भक भूत-सूक्ष्मैः] संपरिष्वक्तः = परिवेष्टितः सन् [धूमादि मार्गेण स्वर्ग-लोकम्], रंहति = गच्छति, [कुतः] प्रश्ननिरूपणाभ्याम् = 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषः वचसो भवन्ति' (छा० ५/३/३) इति प्रश्नः, तथा 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५/९/१) इति प्रतिवचनं, ताभ्याम् हेतुभ्यामित्यर्थः ।

**सू०- त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

पद०– त्र्यात्मकत्वात्, तु, भूयस्त्वात् ।

पदा०- सूत्रे तु शब्द उपरोक्त आशंका निवृत्त्यर्थः [त्रिवृत्करणश्रुत्या अपामितर भूतद्वयमेलनेन] त्र्यात्मकत्वात् = भूत त्र्यात्मकत्वात्] [जलेतरभूतपरिष्वङ्गस्यापि सिद्धिः ननु श्रुतौ जलभूयस्त्वं कथं सयुक्तिकमितिचेत्, न] भूयस्त्वात् = तेज आद्यपेक्षया शरीरे जलभागस्याधिक्यात् इत्यर्थं ।

## सू०- प्राणगतेश्च ॥ ३ ॥

पद०— प्राणगतेः, च ।

पदा०- च = अपि प्राणगतेः [तमुत्क्रामन्तं प्राणोऽनूत्क्रामति,इति श्रुतौ] प्राणानाम् = इन्द्रियाणाम्,गतेः = [जीवेन सहधूमादि मार्गेण] स्वर्गलोक गमन श्रवणात्, [तत्परिष्वङ्ग सिद्धिः] ।

## सू०-अग्न्यादि गति श्रुतेरिति चेन्न भाक्तत्वात्॥४॥

पद०— अग्न्यादिगतिश्रुतेः, इति चेत्, न, भाक्तत्वात् ।

पदा०- अग्न्यादि गति श्रुतेः = अग्निं वागप्येति सूर्यं चक्षुरप्येति मनश्चन्द्रमप्येति, (बृह० ३/२/१३) इत्यादि श्रुतौ मरणकाले इन्द्रियाणां तदभिमानिदेवतासु अग्न्यादिषु गमन श्रवणात्, [इन्द्रियाणां जीवेन सह स्वर्गलोक प्राप्तिरनुपपन्नः] इति

चेन्न, भाक्तत्वात् = [ 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृह० ४/४/२) इत्यादि, अनेकश्रुतिविरोधेन अग्न्यादिषु गमनश्रुतेः] गौणत्वात् ।

**सू०-प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः॥५॥**

पद०- प्रथमे, अश्रवणात्, इति, चेत्, न, ताः, एव, हि उपपत्तेः ।

पदा०- (द्युतिलोकादिषु पञ्चाग्निषु) प्रथमे = आद्ये द्युलोकाख्ये अग्नौ [तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति, (छा० ५/४/२) इति श्रद्धाया एव आहुतित्वश्रुतेः अपाम्] अश्रवणात् = श्रवणाभावात् [कथं पुरुष वचस्त्वम्] इति चेन्न = हि यतः [आपो हास्मै श्रद्धां सन्नमन्ते, इति श्रद्धा शब्देन तद्धेतवः] ता एव = आप एव [लक्ष्यन्ते, कुतः] उपपत्तेः = प्रश्न प्रतिवचन योरुपपत्तेः ।

**सू०-अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥६॥**

पद०- अश्रुतत्वात्, इति, चेत्, न, इष्टादि, कारिणाम्, प्रतीतेः ।

पदा०- [श्रद्धा शब्दितानामपां पुरुष वचस्त्वेऽपि न तद्वेष्टितत्वं-जीवस्य] अश्रुतत्वात् = श्रुति रहितत्वात्, इति चेन्न [कुतः ?

'अथ य इमे ग्राम इष्टापूर्ते' (छा. ५/१०/३) इत्यादिना वाक्य शेषेन ] इष्टादिकारिणाम् = इष्टापूर्त कर्म कारिणाम् प्रतीतेः = प्रत्ययात् ।

## सू०-भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॥७॥

पद०- भाक्तम्, वा, अनात्मवित्त्वात्, तथा हि, दर्शयति ।

पदा०- अस्मिन् सूत्रे वा शब्दः पूर्वोक्त शङ्का निरासार्थकः । [तेषा मिष्टादिकारिणाम् अन्नत्वम्] भाक्तम् = गौणम् [न मुख्यं अन्यथा 'स्वर्गकामो यजेत्' इति श्रुतिव्याकोपः स्यात् अतः] अनात्मवित्त्वात् = आत्मज्ञान शून्यत्वात् (तेषां देवोपभोग्यत्व-रूपमन्नत्वं वाच्यम्] हि = यतः, तथा = तेन प्रकारेण [अथ योऽन्याम्, इत्यादि श्रुति] दर्शयति = कथयति ।

### अधिकरणसार

अवेष्टितो वेष्टितो वा भूत सूक्ष्मैः पुमान्व्रजेत् ।
भूतानां सुलभत्वेनयात्यवेष्टितः एव सः ॥ १ ॥
बीजानां दुर्लभत्वेन निराधारेन्द्रिया गतेः ।
पञ्चमाहुतितोक्तेश्च जीवस्तैर्याति वेष्टितः ॥ २ ॥

## २—कृतात्ययाधिकरणम् सू०- ८-११

**सू०- कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥**

पद०— कृतात्यते, अनुशयवान्, दृष्टमृतिभ्याम्, यथेतम् अनेवम्, च ।

पदा०- कृतात्यये = कृतस्य स्वर्गप्रापक कर्मसमूहस्य [भोगेन] अत्यये = विनाशेसति, अनुशयवान् = आमुष्मिक फलप्रापक कर्मातिरिक्त कर्मवान् [अवरोहति, कुतः ?] दृष्टस्मृतिभ्याम् = दृष्टम् 'तद्य इह रमणीयचरणा' (छा० ५/१०/७) इत्यादिकं श्रुतिरूपं प्रत्यक्षं शास्त्रम्, तथा 'प्रेत्य कर्मफलमनुभूय ततः शेषेणविशिष्ट देशकाल' इत्यादि स्मृतिः ताभ्यां हेतुभ्याम् । [ ते च येन मार्गेण चन्द्रलोकमारूढास्तेनैवावरोहन्ति-आहोस्वित्तद्विपरीतेनेत्याकांक्षायामाह] यथेतम् अनेवं च = यथा इतम् येन क्रमेण धूमादि मार्गद्वारा गतं तद्विपरीतेन कथयिष्यमाणाभ्रादि मार्गेण च अवरोहन्ति इतिसूत्र तात्पर्यम् ।

**सू०-चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः॥९॥**

पद०— चरणात्, इति, चेत, न, गपलक्षणार्था, इति, कार्ष्णाजिनिः ।

पदा०-[ननु] चरणात् = चारित्र्यात्, [एव 'रमणीयचरणाः, (छा० ५/१०/७)इति श्रुतिः योन्यापत्ति दर्शयति, न अनुशयात् चरणानुशयौ च परस्परंभिन्नौ] इति चेन्न, [यतः] कार्ष्णाजिनिः = तन्नामकः कश्चनाचार्यः [इयं चरण श्रुतिः] उपलक्षणार्था = स्वप्रतिपादकत्व विशिष्ट स्वेतर प्रतिपादिका, इति [मन्यते] ।

## सू०—आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

पद० आनर्थक्यम् इति, चेन्न, तदपेक्षत्वात् ।

पदा०- [ननु चरण श्रुतेर्मुख्यार्थपरित्यागेनानुशयार्थकत्वे] आनर्थक्यमिति चेन्न, तदपेक्षत्वात् = इष्टादि कर्मणामाचारनिर्वर्त्यत्वेन चरणापेक्षत्वात् ]चरण श्रुतेः सार्थकत्वम् इत्यर्थः] ।

## सू०- सुकृतदुष्कृते एवेति तु बादरिः ॥११॥

पद०- सुकृतदुष्कृते, एव, इति, तु, बादरिः ।

पदा०- बादरिः = तन्नामकः आचार्यवर्यस्तु [चरण शब्देन] सुकृतदुष्कृते = पुण्यपापे एव[गृह्येते] इति [मन्यते, कुतः ? लोके धर्मं चरति, इति प्रतीत्यां कर्मचरणयोः परस्परमभेदेन प्रयोग

दर्शनात्, अतः इष्टादि कर्मकारिणां चन्द्रलोकं गतानां पुनरवरोहार्थमनुशयोऽस्तीति सिद्धम् ।

अधिकरणसार

स्वर्गावरोही क्षीणानुशयः सानुशयोऽथवा ।
यावत्संपात वचनात्क्षीणानुशय इष्यते ॥ १ ॥
जातमात्रस्य भोगित्वादैक भव्ये विरोधतः ।
चरणश्रुतितः सानुशयः कर्मान्तिरैरथम् ॥ २ ॥

## ३- अनिष्टादिकार्यधिकरणम् सू० १२-२१

## सू०- अनिष्टादि कारिणामपि च श्रुतम् ॥ १२ ॥

पद०- अनिष्टादिकारिणाम्, अपि, च, श्रुतम् ।

पदा०- [इदं पूर्वपक्ष सूत्रम्] अनिष्टादिकारिणाम् = इष्टादि कर्म शून्यानाम्, अपि श्रुतम् = 'ये वै के चास्माल्लोकात्प्रयन्ति' (कौषी० १/२) इत्यादि श्रुत्या चन्द्रलोक गमनं प्रतिपादितम्, च = अतः, [इष्टादि कर्मकारिणो धार्मिका एव चन्द्रलोकं गच्छन्ति इत्येतदसङ्गतमिति सूत्रस्याभिप्रायः] ।

## सूत्र- संयमनेत्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥

पद०- संयमने, तु, अनुभूय, इतरेषाम्, आरोहावरोहौ, तद्गति-दर्शनात् ।

पदा०- तुशब्दप्रयोजनम् पूर्वोक्त शंकाविनाशः । संयमने = यमगृहे [स्वकीय दुष्कृत्यनुरूपायामी यातनाः] अनुभूय = उपभुज्य एव इतरेषाम् = निषिद्धानुष्ठातॄणाम्, आरोहावरोहौ = गत्यागती भवतः [कुतः ?] तद्गतिदर्शनात् = 'अयं लोको नास्ति' (कठ. १/२/६) इत्यादि श्रुतौ यमाधीनत्वलक्षणतद्गतेः दर्शनात् इत्यर्थः ।

## सू०—स्मरन्ति च ॥ १४ ॥

पदा०- च = अपि, मन्वादयः शिष्टाः स्मृतिकारा दुष्कृतिजनिजुषां नरक भोगम्] स्मरन्ति = स्वीयस्मृतिग्रन्थैः स्पष्टं कथयन्ति, [अतः इष्टादिकारिणः एव चन्द्रलोकं गन्तारः नान्ये इति गूढाभिप्रायः] ।

## सू०- अपि च सप्त ॥ १५ ॥

पदा०- अपि च = अन्यदपि, सप्त = रौरव प्रमुखाः सप्त संख्यकाः नरकाः [पापफल भूमित्वेन स्मर्य्यन्ते पौराणिकैः अतः सुकृ-

तिन एव चन्द्रलोकाख्यपुण्यफलभूमेरधिकारिणः न दुर्मेधसो दुष्कृतिन इति भगवतः सूत्रकृतोऽभिप्रायः] ।

## सू०- तत्रापि च तद् व्यापारादविरोधः ॥१६॥

पद०– तत्र, अपि, च, तद् व्यापारात्, अविरोधः ।

पदा०- [ननु एतदयुक्तमिव–पापभाजो यामीर्यातना उपभुञ्जते इति, रौरव प्रभृतिषु चित्रगुप्तादीनामधिष्ठातृत्वस्य शास्त्रेषु प्रसिद्धत्वादिति चेन्न] तत्र अपि = रौरवादिष्वपि [चित्रगुप्ता–दीनां यमायतत्वेन] तद् व्यापारात् = यमाधिष्ठातृत्व व्यापा-रात्, च = अतः, अविरोधः = न यामी यातना विरोध इति ।

## सू०—विद्याकर्मणोरिति तु प्रकृतत्वात् ॥१७॥

पद०– विद्याकर्मणोः, इति, तु, प्रकृतत्वात् ।

पदा०-('अथैतयोः पथोर्न' इत्यादि श्रुतौ 'एतयोः' शब्देन) विद्याकर्म-णोरिति गृह्यते (कुतः ?) प्रकृतत्वात् = तयोर्विद्याकर्मणोरेव देवयान पितृयाणात्मकमार्गद्वयसाधनत्वेन प्रकृतत्वात् । तुशब्दो-ह्यत्र 'चन्द्रमसमेव ते सर्वेगच्छन्ति' इति श्रुति संजात शङ्कां विच्छिनत्ति ।

## सू०- न तृतीये तथोपलब्धेः ॥ १८ ॥

पद०- न, तृतीये, तथा, उपलब्धेः ।

पदा०- तृतीये = तृतीयमार्गे प्रविष्टानां पापिनां देह प्राप्त्यर्थमाहुति संख्यानियमः)न = न भवति,(कुतः ?)तथोपलब्धे = 'जायस्व म्रियस्व'(छा. ५/१०/८)इत्यादि श्रुतौ संख्या नियमं विनैव तृतीयेमार्गे देहप्राप्तेरुपलब्धेः(इत्यर्थः अतश्चेष्टादिकारिणा–मेवायं संख्यानियम इति भावः ) ।

## सू०- स्मर्यतेऽपि च लोके ॥ १९ ॥

पद०- स्मर्यते, अपि, च, लोके ।

पदा०- अपि च लोके = भारतादौ, द्रोणधृष्टद्युम्नादीनामयोनिजत्वं स्मर्यते = स्मृतिपथं भवति(तत्र द्रोणादेः योषिदाहुतिर्न धृष्ट–द्युम्नादीनाञ्च योषित्पुरुषविषये द्वे आहुती न भवतः) अतः आहुति संख्यानियम व्यभिचारः तथान्यत्रापीति भावः ।

## सू०— दर्शनाच्च ॥ २० ॥

पद०- दर्शनाद्, च ।

पदा०- च = अपि (लोके जरायुजाण्डजस्वेदजोद्भिज्जेषु चतुर्विधेषु देहेषु स्वेदजोद्भिज्जयोः स्त्री पुंस व्यक्ति संयोग विना एवोत्पत्ति दर्शनान्नहुति संख्या नियम इत्यर्थः) ।

## सू०- तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

पद०- तृतीयशब्दावरोधः, संशोकजस्य ।

पदा०- संशोकजस्य = स्वेदजस्य, तृतीयशब्दावरोधः = तृतीयशब्देन 'आण्डजं जीवजम्' (छा. ६/३/१) इत्यत्र श्रुतेनोद्भिज्जेन अवरोधः = सग्रहः (वृक्षादिकं पृथ्वीमुद्भिद्य जायते स्वेदजन्तु जलमिति उभयोरवयवार्थत्वाविशेषात्, तथा च 'आण्डजम्' (छा. ६/३/१) इत्यादि श्रूतौ शरीरत्रैविध्यश्रवणेऽपि न लोके प्रसिद्ध शरीर चातुर्विध्य प्रसिद्धि भङ्ग इति भावः) ।

### अधिकरणसार

चन्द्रं याति न वा पापी ते सर्वं इति वाक्यतः ।
पञ्चमाहुति लाभार्थं भोगाभावेऽपियात्यसौ ॥ १ ॥

भोगार्थमेव गमनमाहुतिव्यंभिचारिणी ।
सर्वश्रुतिः सुकृतिनां याम्ये पापिगतिः श्रुता ॥ २ ॥

## ४- साभाव्यापत्त्यधिकरणम् सू०- २२

### सू0– तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

पद०– तत्साभाव्यापत्तिः, उपपत्तेः ।

पदा०-(जीवानाम्)साभाव्यापत्तिः = (तैः आकाशादिभिः)साभाव्यापत्तिः, समानः भावः = रूपं येषां ते सभावाः, तेषां भावः साभाव्यं–सादृश्यम्–तस्य आपत्तिः–प्राप्ति (कुतः ?) उपपत्तेः = चन्द्रलोकं गतानामनुशयिनां प्रवृत्तफलकर्मक्षयदर्शनजनित शोकाग्निादह्यमानमिदं शरीरं करकादिवत् विलीयमानमाकाश समं भवतीति–एतदुपपद्यते, (न हि अन्यस्यान्यभावोमुख्य उपपद्यते, तस्मात्सादृश्यमेव प्रतिपद्यन्त इति सिद्धम्)।

अधिकरणसार

वियदादि स्वरूपत्वं तत्साम्यं वाऽवरोहिणः ।
वायुर्भूत्वेत्यादि वाक्यात्तत्तद्भावं प्रपद्यते ॥ १ ॥

खवत्सूक्ष्मो वायुवशो युक्तोधूमादिभिर्भवेत् ।
अन्यस्यान्यस्वरूपत्वं न मुख्यमुपपद्यते ॥ २ ॥

## ५- नातिचिराधिकरणम् सू०- २३

## सू०- नातिचिरेण विशेषात् ॥ २३ ॥

पद०— न, अतिचिरेण, विशेषात् ।

पदा०— (जीव )न अतिचिरेण = अल्पकालमेव (आकाशादि वर्षान्तैः सादृश्येनावस्थाय वर्षणधारा द्वारा पृथिवीं प्रविशति, कुतः? ] विशेषात् = व्रीह्यादि भावापत्यनन्तरम् 'अतो वै खलु दुर्निष्प्रपतरम्' (छा. ५/१०/६) इत्येवं रूपेण विशेषात् [ततः पूर्वं सुनिष्प्रपतरत्वं ज्ञायते इति भावः] ।

अधिकरणसारः

व्रीह्यादेः प्राग्विलम्बेन त्वरया वाऽवरोहति ।
तत्रानियम एव स्यान्नियामकविवर्जनात् ॥ १ ॥
दुःखं व्रीह्यादिनिर्याणमिति तत्र विशेषितः ।
विलम्बस्तेन पूर्वत्र त्वराऽर्थादवसीयते ॥ २ ॥

## ६- अन्याधिष्ठिताधिकरणम् सू०— २४-२७

## सू०- अन्याधिष्ठितेषु पूर्ववदभिलापात् ॥ २४ ॥

पद०— अन्याधिष्ठितेषु, पूर्ववदभिलापात् ।

पदा०-अन्याधिष्ठितेषु = अन्यैः जीवैः अधिष्ठितेषु 'व्रीह्यादिषु संसर्ग-

मात्रमनुशयिनां भवति, [कुतः] पूर्ववदभिलापात् = यथा आकाशादि वर्षान्तेषु कर्मपरामर्शमन्तरेणैव प्रवेश उक्तः-'तथा व्रीह्यादिष्वपि कर्म परामर्शं विनैव प्रवेशाभिलापात् [अतः कर्मपरामर्शाभवान्न व्रीह्यादिष्वनुशयिनां सुखादि भोगः] ।

## सू०- अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

पद०- अशुद्धम्, इति चेत् न, शब्दात् ।

पदा०- [ननु ज्योतिष्टोमादिकं कर्म पशुहिंसादियोगात्] अशुद्धम् = [अतस्तत्कारिणामनुशयिनां व्रीह्यादि स्थावरेषुदुःखानुभवार्थं मुख्यमेव जन्माऽस्तु,] इति चेन्न, शब्दात्–विधिरूपात् शास्त्रात् [अग्निष्टोमादिनां धर्मतयावगमान्नतत्रदुःखजनकता इति भावः ।

## सू०- रेतः सिग्योगोऽथ ॥ २६ ॥

पद०- रेतःसिग्योगः, अथ ।

पदा०- अथ = व्रीह्यादिभावानन्तरम् [अनुशयिनाम्] रेतस्सिग्योगः = रेतः सिञ्चतीति रेतस्सिक् तद्योगः– तद्भावः ['योरेतः सिञ्चति, इत्यादि श्रुतो आम्नायते] ।

## सू०– योनेः शरीरम् ।। २७ ।।

पद०– योनेः, शरीरम् ।

पदा०– [योनौ रेतसि निषिक्ते सति ततः] योनेः = शरीरम् सुख दुःखोपभोगयोग्यं कर्मोपार्जितम् शरीरम् [जायते, इति 'रम–णीय चरणाः' इत्यादि शास्त्रं कथयति, तस्माद् ब्राह्मणादि योनावेवानुशयिनां मुख्यं जन्म नान्यत्र व्रीह्यादाविति भावः] ।

### अधिकरणसार

व्रीह्यादौ जन्म तेषां स्यात्संश्लेषो वा अनिर्भवेत् ।
जायन्त इति मुख्यत्वात्पशुहिंसादि पापतः ।। १ ।।
वैधान्न पापसंश्लेषः कर्मव्यापृत्यनुक्तितः ।
श्वविप्रादौ मुख्यजनौ चरणव्यापृतिः श्रुता ।। २ ।।

।। इति तृतीयोऽध्याये प्रथमः पादः ।।

॥ ॐ विज्ञानमानन्दं ब्रह्म ॥

# ब्रह्मसूत्र-तृतीयोऽध्यायः द्वितीयः पादः

[अस्मिन् पादे तत्त्वंपदार्थं परिशोधन विचार]

## १ सन्ध्याधिकरणम् सू०– १—६

### सू०– संध्ये सृष्टिराहहि ॥ १ ॥

पद०– सन्ध्ये, सृष्टिः, आह, हि ।

पदा०– सन्ध्ये = जाग्रतसुषुप्त्योः सन्ध्यौ भवे स्वप्ने, सृष्टिः = तत्रस्वप्ने दृश्यमानं स्थावर जङ्गमात्मकं जगत् व्यावहारिकमेव भवितुमर्हति, [कुतः ?] हि = यतः [तथा भगवति श्रुतिः] आह = 'अथ रथान्' (बृ. ४/३/१०) इत्यादिना कथयति ।

### सू०– निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

पद०– निर्मातारम्, च, एके, पुत्रादयः, च ।

पदा०– एके = केचनशाखिनः [अस्मिश्चस्वप्ने कामानाम्] निर्मातारं = उत्पादकम्, [ईश्वरम् आमनन्ति 'य एष सुप्तेषु जागर्ति, कठ.५/८' इति श्रुतेः, तत्र श्रुतौ 'कामाः, इत्यनेन] पुत्रादयश्च = तनुजादयश्च] अभिधीयन्ते, काम्यन्त इति व्युत्पत्तेः, एवञ्च स्वप्न-

सृष्टिः व्यावहारिकसत्त्ववती ईश्वरकर्तृकत्वात्, क्षित्यादिवत्, इत्यनुमानं सूत्रेणानेन प्रत्यर्पितमिति श्रुत्यनुमानेन च स्वप्न-प्रपञ्चस्य व्यावहारिकत्वं सिद्धम् ।

**सू०– मायामात्रं तु कार्त्स्न्येनानभिव्यक्त स्वरूपत्वात् ॥ ३ ॥**

पद०– मायामात्रम्, तु, कार्त्स्न्येन, अनभिव्यक्त, स्वरूपत्वात् ।

पदा०-तु शब्द पूर्वपक्षनिरासार्थः [स्वप्नसृष्टि शुक्तिरुप्यवन्माया-मात्रम्, कुतः ?] कार्त्स्न्येन = देशकालादि सम्पत्त्यबाधरूप-परमार्थवस्तुधर्मेण, अनभिव्यक्तस्वरूपत्वात् = अभिव्यक्तिशून्य-स्वरूपत्वात्, [अतः प्रातिभासिक एव स्वप्नः न व्यावहारिक इति सिद्धम् ।

**सू०– सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥**

पद०– सूचकः, च, हि, श्रुतेः, आचक्षते, च, तद्विदः ।

पदा०- [स्वप्ने जायमानः स्त्रीदर्शनादिः सत्य एव, स च सत्यस्य साध्वसाधु वस्तुनः] सूचक. = हेतुः, हि = यतः, [तथा] श्रुतेः = 'यदा कर्मसुकाम्येषु [छा. ५/२/८) इति श्रुतेः [अवगम्यते] तद्विदः = स्वप्नाध्यायविदोहि, आचक्षते च = शुभाशुभ सूचकत्वं

कथयन्ति च स्वप्न दर्शनस्य, [वस्तुतस्तु दर्शनस्य स्त्र्याद्यर्थ-रूपितत्वेनासत्यत्वेऽपि शुक्तिरूप्यविज्ञानस्य तथ्यहर्षादिजनक-त्ववत् सत्यशुभादिसूचकत्वमविरुद्धम् इति भावः ] ।

## सू०- पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥

पद०- पराभिध्यानात्, तु, तिरोहितम् ततः, हि अस्य, बन्धवि-पर्ययौ ।

पदा०- अस्य = जीवस्य, तिरोहितम् = आवृतम् [ऐश्वर्यम्] पराभि-ध्यानात् = ईश्वरस्य आभिमुख्येन ध्यानात् [अभिव्यक्तं भवति, कुतः ?] तत बन्धविपर्ययौ = तस्मादज्ञातादीश्वरात् बन्धः ज्ञाताद्धि तस्मात् विपर्ययः-मोक्ष [इति 'ज्ञात्वादेवं सर्वपाशाप-हानिः' (श्वे० १/११) इति श्रुतिर्दर्शयति । एवञ्च जीवेश्वर-योरभेदेऽप्यैश्वर्यस्य तिरोहितत्वात् न जीवस्य संकल्पमात्रेण स्रष्टृत्वम्] ।

## सू०- देहयोगाद्वा सोऽपि ॥ ६ ॥

पद०- देहयोगात्, वा, सः, अपि ।

पदा०- सोऽपि = जीवैश्वर्यतिरोभावोऽपि, देहयोगात् = देहाद्यात्म-

त्वाभिमानलक्षणाविद्यावशात् भवति ।

अधिकरणसार

सत्यामिथ्याऽथवा स्वप्नसृष्टिः, सत्या श्रुतीरणात् ।
जाग्रद्देशाविशिष्टत्वादीश्वरेणैव निर्मिता ॥ १ ॥
देशकालाद्यनौचित्याद् बाधितत्वाच्च सा मृषा ।
अभावोक्तेर्द्वैतमात्रसाम्याज्जीवानुवादतः ॥ २ ॥

## २- तदभावाधिकरणम् सू० ७-८

### सू०- तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥७॥

पद०- तदभावः, नाडीषु, तच्छ्रुतेः, आत्मनि, च ।

पदा०- तदभावः, = तस्य प्रकृतस्यस्वप्नदर्शनस्य अभावः अर्थात् सुषुप्तम्, नाडीषु-सिरासु, आत्मनि = प्राज्ञे च [भवति अत्र नाडीष्वात्मनि चेति समुच्चयेन विकल्पो निरस्यः, स च समुच्चयः परमात्मनः प्राधान्येन इतरयोश्च नाडीपुरीततोर्गुणभूततया ज्ञेयः, [कुतः? ] तच्छ्रुतेः = तेषां नाड्यादीनां सर्वेषां समुच्चयतः एव तत्र तत्र सुषुप्तिस्थानत्वस्य श्रवणात् [विकल्पेतु तेषां पक्षे बाधः स्यादिति भावः ] ।

## सू०- अतः प्रबोधोऽस्मात् ॥ ८ ॥

पद०- अतः, प्रबोधः, अस्मात ।

पदा०-[यतः परमात्मैव प्रधानतया सुषुप्ति स्थानम्]अतः = एतत्कारणात्, अस्मात् = परमात्मनः [जीवस्य] प्रबोधः = उत्थानम् [स्वापाधिकारे]"सत आगम्य न विदुः सत आगच्छामहे" (छा. ६/१०/२) इत्यादिना उपदिश्यते ।

अधिकरणसार

नाडीपुरीतद्ब्रह्माणि विकल्प्यन्ते सुषुप्तये ।
समुच्चितानि वैकार्थ्याद्विकल्प्यन्ते यवादिवत् ॥ १ ॥
समुच्चितानि नाडीभिरुपसृप्य पुरीतति ।
हृत्स्थे ब्रह्मणि यात्यैक्यं विकल्पेत्वष्टदोषता ॥ २ ॥

## ३- कर्मानुस्मृति शब्द विध्यधिकरणम् सू०-९

## सू०-स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

पद०- स, एव, तु, कर्मानुस्मृतिशब्दविधिभ्यः ।

पदा०- [यः सुप्तः स्वरूप्यं गतो जीवः] स एव तु [जीवः प्रबुध्यते, नान्यः, कुतः ?] कर्मानुस्मृतिशब्दविधिभ्यः = कर्मादिभ्यः

पञ्चभ्यो हेतुभ्यः । [दिनद्वयसाध्यं कर्म सामि कृत्वा सुप्तो भूयउत्थाय शिष्टंतत्करोति, अत्र अनु प्रत्यभिज्ञां सूचयति, सा च, योऽहं गतदिने घटमद्राक्ष स एवैतर्हिस्पृशामि, इत्येवं-रूपा, अनुभवानन्तरं संस्कारमात्रेण जायमानं 'सघटः' इत्यादिकं ज्ञानं स्मृतिपदवाच्यम् 'पुनः प्रतिन्यायम्' इत्यादि शब्दः, विधिशब्देन कर्मविद्याविषय उच्यन्ते । यदि सुप्तस्य भूय उत्थानं न स्यात्, तदा उक्ता इमे हेतवो बाध्येरन्, अतः सुप्त एवोत्तिष्ठति इति भावः] ।

अधिकरणसार

यः कोऽप्यनियमेनात्र बुध्यते सुप्त एव वा ।
उदबिन्दुरिवाशक्तेर्नियन्तु कोऽपि बुध्यते ।। १ ।।
कर्माविद्यापरिच्छेदादुदबिन्दु विलक्षणः ।
स एव बुध्यते शास्त्रात्तदुपायैः पुनर्भवात् ।। २ ।।

## ४- मुग्धाधिकरणम् सू० १०

### सू०- मुग्धेऽर्धसंपत्तिः परिशेषात् ।। १० ।।

पद०- मुग्धे, अर्धसम्पत्तिः, परिशेषात् ।

पदा०- [मूर्च्छावस्थाया न स्वप्नजागरितयोर्मरणेवाऽन्तर्भावः, तत्र ज्ञानाभावस्यप्राणोष्मणोश्च सत्त्वात्, नापि सुप्तिः, भयानक-वदनत्वादिना तस्या वैलक्षण्यात्, किन्तु परिशेषात् = प्राप्तस्य प्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे वस्तुनि यः सम्प्रत्ययः सः परिशेषः, तस्मात् मुग्धेः = मूर्च्छावस्थायाम् [हृत्पुण्डरीकाव-च्छिन्ने ब्रह्मणिदेहाद्यभिमान विशिष्टस्यजीवस्य] अर्धसम्पत्तिः = अर्धलयः [भवति, अतः उक्तावस्थात्रय वैलक्षण्यात् मूर्च्छा-वस्था ततोभिन्नेति भावः] ।

अधिकरणसार

किं मूर्छका जाग्रदादौ किं वाऽवस्थान्तरं भवेत् ।
अन्यावस्था न प्रसिद्धा तेनैका जाग्रदादिषु ॥ १ ॥

न जाग्रत्स्वप्नयोरेका द्वैताभावान्न सुप्तता ।
मुखादिविकृतेस्तेनावस्थाऽन्या लोक सम्मता ॥ २ ॥

## ४— उभयलिङ्गाधिकरणम् सू०- ११-२१

### सू०—न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥११॥

पद०— न, स्थानतः, अपि, परस्य, उभयलिङ्गम्, सर्वत्र, हि ।

पदा०— परस्य = ब्रह्मणः, उभयलिङ्गम् = सविशेषनिर्विशेषरूपोभयस्वभावकत्वं न [सम्भवति, सत्यस्य वस्तुनोद्वैरूप्यायोगात्] नापि स्थानतः = उपाधितः [उक्तोभयरूपत्वं सत्यम् अग्निसम्बन्धमात्रेण जलस्योष्णस्य तत्स्वभावत्वादर्शनात्, अतो ब्रह्मण एक रूपत्वमेववाच्यम] हि = यतः, सर्वत्र = सर्वेषु वेदान्तवाक्येषु 'अशब्दमस्पर्शमरूपम्—' (कठो० १/३/१५) इत्यादि ब्रह्मपरेषु [सविशेषत्वनिरसनेन निर्विशेषमेवैकरूप ब्रह्मतत्त्वमुपदिश्यते इत्यर्थः] ।

**सू०- न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२॥**

पद०— न, भेदात्, इति, चेत, न, प्रत्येकम्, अतद्वचनात् ।

पदा०- [ननु सर्वत्र वेदान्तेषु निर्विशेषमेव ब्रह्म उपदिश्यते, इति युक्तम्] न = नहीं, [कुतः? ] भेदात् = प्रतिविद्यं परस्य चतुष्पादाद्याकारभेदेन भेदात् [सविशेषमपि श्रुति बलादङ्गीकर्तव्यम्? ] इतिचेन्न, प्रत्येकम् = प्रत्युपाधि, अतद्वचनात् = 'यश्चायमस्याम् (बृ० २/५/१) इत्यादि श्रुतिषु ब्रह्मणः सर्वत्रोपाधौ अभेदस्य श्रवणात् ।

## सू०- अपि चैवमेके ॥ १३ ॥

पद०– अपि, च, एवम्, एके ।

पदा०- अपिच = और भी एके = शाखिनः, 'मृत्युमाप्नोति य इह नानेव पश्यति' 'नेह नानास्ति किञ्चन' (क० २/१/११) इत्येवंरूपेण श्रुतिवाक्येन भेदनिन्दापूर्वकमभेदमेव परस्य ब्रह्मणः समामनन्ति, इति सूत्रार्थः ।

## सू०- अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

पद०– अरूपवद्, एव, हि तत्प्रधानत्वात् ।

पदा०- अरूपवत् = न रूपवत्-अरूपवत् इति व्युत्पत्त्या रूप हीनं निर्विशेषमेव [ब्रह्म अवधारयितव्यम्, न सविशेषम्, कुतः–ह्येवम् ?] हि = यतः, तत्प्रधानत्वात् 'अस्थूलम्' (बृ० ३/८/८) इत्यादि निषेध शास्त्रस्य निर्गुणब्रह्मप्रधानत्वादित्यर्थः ।

## सू०- प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

पद०– प्रकाशवत्, च, अवैयर्थ्यम् ।

पदा०-प्रकाशवत् = यथा सवितृप्रभृतीनां प्रकाशो वक्र वंशाद्युपाधीनुप०

लम्य वक्र इव ऋजुरिव भवति, तद्वत् [ब्रह्म] च = अपि [पृथ्व्यादि भूतोपाधि वशात्तत्तदाकरमिव, भवति, न वस्तुतः अतः उपासनाकाण्डपठितानां सविशेषब्रह्मप्रतिपादकश्रुतीनां तद्‌शोपाधिकाकार एव गतिरिति, तासाम्] अवैयर्थ्यम् = नास्ति नैरर्थक्यम् ।

**सू०- आह च तन्मात्रम् ॥ १६ ॥**

पद०- आह, च, तन्मात्रम् ।

पदा०- च = अतः [एव 'स यथा सैन्धव घनः' (बृ० ४/५/१३) इत्यादि श्रुतिः] तन्मात्रम् = चैतन्यमात्रं स्वप्रकाशचिदेकरसं निर्विशेषम्, आह = कथयति ।

**सू०- दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥**

पद०- दर्शयति, च, अथो, अपि, स्मर्यते ।

पदा०- ('अथात आदेशो नेति नेति' इत्यादि श्रुतिः निषेधमुखेनैव ब्रह्म] दर्शयति = कथयति, च = अतः, अथो = तथा, स्मर्यतेऽपि = 'अनादिमत्परं ब्रह्म न सत् तन्नासदुच्यते' (गी.१३/१२) इत्यादि भगवद्‌गीतावचनेन निषेध मुखतो ब्रह्म स्मृतमपि भवति ।

**सू०– अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥**

पद०– अतः, एव, च, उपमा, सूर्यकादिवत् ।

पदा०– [यत एवायमात्मा चैतन्यैकरसः परप्रतिषेधोपदेश्योनिर्विशेषः] अत एव = अस्मादेव हेतोः [यथा ह्ययं ज्योतिरात्मा] इत्यादिषु शास्त्रेषूपाधिकृतं सविशेषत्वमादाय] सूर्यकादिवत् = जलगत सूर्यप्रतिबिम्बवत्, उपमा = सदृश्यम् [दीयते न तु वस्तुगत्या ब्रह्म सविशेषमिति सूत्रस्यास्याऽभिप्रायः] ।

**सू०– अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥**

पद०– अम्बुवत्, अग्रहणात्, तु, न, तथात्वम् ।

पदा०– अम्बुवत् = यथा जलं सूर्यरूपान्मूर्तात् भिन्नं दूरस्थं मूर्तञ्च गृह्यते, तद्वत् [अमूर्तात् सर्वात्मकात्मनो भिन्नदूरस्थोपाधेः] अग्रहणात् = ग्रहणाभावात्, न तथात्वम् = न सूर्य तुल्यत्वमिति शङ्कार्थः ।

**सू०– वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥**

पद०– वृद्धिह्रासभाक्त्वम्, अन्तर्भावात्, उभयसामञ्जस्यात्, एवम् ।

पदा०- [यथासूर्यप्रतिबिम्बस्य जलान्तर्वर्तिनोजलगतवृद्धिह्रासाक्त्वं न स्वाभाविकम्] एवम् = तथा [निर्विशेषस्य परमात्मनोदेहाद्युपाधिषु] अन्तर्भावात् = अन्तर्गतत्वात्, वृद्धिह्रासभाक्त्वम् = देहादिगत वृद्धिह्रासभाक्त्वम् [न वास्तविकम्, इत्येतावतांशेन उभयोर्दृष्टान्त दार्ष्टान्तिकयोः] सामञ्जस्यम् = सङ्गतत्वात् [भवतिसूर्यादिदृष्टान्तः, न हि दृष्टान्त दार्ष्टान्तिकयोः सर्वांशेन समत्वं ब्रह्मणापि चतुर्मुखेन वक्तुं शक्यम्, तथात्वे तदुच्छेदापातात्] ।

## सू०- दर्शनाच्च ॥ २१ ॥

पद०- दर्शनात्, च ।

पदा०- [परस्य ब्रह्मणः देहान्तरनुप्रवेशस्य प्रतिबिम्बभावरूपस्य 'पुरश्चक्रे द्विपदः' (बृ० २/५/१८) इत्यादि श्रुतौ] दर्शनात् = दृष्टत्वाच्च [निर्विशेषमेव ब्रह्म सिद्धम्] ।

### अधिकरणसार

ब्रह्म किं रूपि चारूपं भवेन्नीरूपमेववा ।
द्विविधि श्रुति सद्भावाद् ब्रह्म स्यादुभयात्मकम् ॥ १ ॥

नीरूपमेव वेदान्तैः प्रतिपाद्यमपूर्वतः ।
रूपं त्वनूद्यते भ्रान्तमुभयत्वं विरुध्यते ॥ २ ॥

## ६- प्रकृतैतावत्त्वाधिकरणम् सू० २२—३०

**सू०- प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥**

पद०- प्रकृतैतावत्त्वम्, हि प्रतिषेधति, ततः, ब्रवीति, च, भूयः ।

पदा०- प्रकृतैतावत्त्वम् = प्रकृते प्रधानतया उपन्यस्तं यत् इयत्ता-परिच्छिन्नं ब्रह्मणो रूपद्वयं [तदेव] प्रतिषेधति = निषेधति [नेति नेति, इत्यादि श्रुतिः, इति शब्दस्य प्रधानत्वेन प्रकृत परामर्शित्वात्, ब्रह्मणश्च न प्रधानत्वेन प्रकृतत्वम् 'द्वे वाव ब्रह्मणोरूपे' [बृ० २/३/१] इति रूप द्वयात्मक जगदुपसर्जन-त्वेनैव तस्याभिहितत्वात् इतश्च ब्रह्मणो न निषेधः] हि = यस्मात्, ततः = प्रपञ्चनिषेधानन्तरम्, भूयः = पुनः 'नह्येत-स्मात्' (बृ० २/३/६) इत्यादि निर्वचनवाक्यम् ब्रह्म ब्रवीति, यद्वा प्रपञ्चनिषेधानन्तरम् 'अथ नामधेयम्' (बृ० २/३/६) इत्यादि वाक्यम् ब्रह्म ब्रवीति [न च प्रपञ्चस्य निषेधे प्रत्यक्ष विरोधः, तस्य व्यावहारिक प्रामाण्यादित्यनवद्यम्] ।

## सू०—तदव्यक्तमाह हि ॥ २३ ॥

पद०— तत्, अव्यक्तम्, आह, हि ।

पदा०- तद् = ब्रह्म, अव्यक्तम् = न व्यज्यते इति अव्यक्तम् इन्द्रिय ग्राह्यं न [भवति] हि = यतः, ['न चक्षुषा गृह्यते नापि वाचा' इत्यादि श्रुतिः] आह = ब्रह्मणः तादृशमव्यक्तरूपं कथयति इति ।

## सू०- अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥२४॥

पद०— अपि, च, संरावने, प्रत्यक्षानुमानाभ्याम् ।

पदा०- अपि च, (एनं परमात्मानं) संरावने = समाऽधवस्थायाम् [कृतार्थः कश्चन पुरुषः पश्यति, इति] प्रत्यक्षानुमानाभ्याम् = 'कश्चिद्धीरः' 'यं विनिद्रा जितश्वासाः' इत्यादि श्रुतिस्मृति-भ्याम् [ज्ञातं भवति] ।

## सू०- प्रकाशादिवच्चावैशेष्यं प्रकाशश्चकर्मण्यभ्यासात् ॥ २५ ॥

पद०— प्रकाशादिवत्, च, अवैशेष्यम् प्रकाशः, च, कर्मणि, अभ्यासात् ।

पदा०- प्रकाशादिवत् = यथा सूर्यस्य प्रकाशोऽङ्गुल्याद्युपाधौ कर्मणि

भिन्न इव प्रतिभाति, वस्तुतस्तु एक रूप एव, तद्वत्, प्रकाश = परमात्मा, च–कर्मणि ध्यानाद्युपाधौ भिन्न इवभाति [वस्तुतस्तु] अवैशेष्यम् = एक रूपत्वमेव तस्य [कुतः ?] अभ्यासात् = 'तत्त्वमसि' इत्याद्यभेदश्रुत्यभ्यासात् इत्यर्थः ।

## सू०- अतोऽनन्तेन तथा हि लिङ्गम् ॥ २६ ॥

पद०– अतः, अनन्तेन, तथा, हि, लिङ्गम् ।

पदा०- अतः = भेदस्यौपाधिकत्वात् [विद्यया भेदं विधूय जीवः] अनन्तेन = परमात्मना [एकतां गच्छति] हि = यतः, तथा = तादृशार्थज्ञापकम् लिङ्गम् = 'सयो हवै तत्परमम्' (मु.३/२/९) इत्यादि श्रुति रूपं प्रमाणम् [वर्तते, इत्यर्थः] ।

## सू०-उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

पद०–उभयव्यपदेशात्, तु, अहिकुण्डलवत् ।

पदा०-उभयव्यपदेशात् = उभययोः–ध्यातृध्येय भावादिना भेदाभेदयोः [श्रुतौ] व्यपदेशात् = कथनात् [जीवेश्वरयोर्भेदाभेदौ भवतः] सौत्रस्तुशब्दः सिद्धान्तगत वैषम्यपरिस्फोटार्थः । [जीवेश्वरयो- र्भेदाभेदयोर्दृष्टान्तमाह] अहिकुण्डलवत् = अहिः -सर्पः, कुण्ड•

लम्-संस्थानविशेषः तयोः परस्परं कुण्डलत्वेनाहित्वेन च यथा भेदाभेदौ तद्वदित्यर्थः ।

सू०- प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

पद०- प्रकाशाश्रयवत्, वा तेजस्त्वात् ।

पदा० -वा = अथवा, प्रकाशाश्रयवत् = यथा प्रकाश तदाश्रययोः, तेजस्त्वात् = तेजस्त्वाविशेषात्, [अभेदेऽपि व्यापकत्व परिच्छिन्नत्वाभ्यां परस्परं भेदः] तद्वत्, जीवेश्वरयोर्भेदाभेदव्यपदेशः ।

सू०— पूर्ववद्वा ॥ २९ ॥

पद०- पूर्ववत्, वा ।

पदा० - वा = अथवा, पूर्ववत् = 'प्रकाशवच्चावैशेष्यम्' इत्यत्र पूर्वभेदः काल्पनिकः, अभेदः पारमार्थिकः इति यदुक्तं तद्वत् [अत्रापि स एव सिद्धान्तोऽभ्युपेयः ] ।

सू०- प्रतिषेधाच्च ॥ ३० ॥

पद०- प्रतिषेधात्, च ।

पदा० - [ 'नान्योऽतोऽस्ति द्रष्टा' (बृ.३/७/२३) इत्यादि श्रुत्या परमार्थव्यतिरिक्तचेतनस्य तथा 'नेति नेति' इत्यादि शास्त्रेण परितो-

दृश्यमानस्य प्रपञ्चस्य च ] प्रतिषेधात् = निषेधात् च [अद्वितीयं ब्रह्मेत्ययं सिद्धान्तः ] ।

अधिकरणसार

ब्रह्मापि नेति नेतीति निषिद्धमथवा न हि ।
द्विरुक्त्या ब्रह्मजगती निषिध्येते उभे अपि ॥ १ ॥
वीप्सेयमिति शब्दोक्ता सर्वदृश्य निषिद्धये ।
अनिदं सत्यसत्यं च ब्रह्मैकं शिष्यतेऽवधिः ॥ २ ॥

## ७—पराधिकरणम् सू०- ३१—३७

### सू०-परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः॥३१॥

पद०— परम् अतः, सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ।

पदा०- अतः = अस्मात् ब्रह्मणः सकाशात्, परम् = अन्यत् [वस्तु अस्ति, कुतः ?] सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः = 'अथ य आत्मा स सेतुः (छा० ८/४/१) 'ब्रह्म चतुष्पाद' 'प्राज्ञेनात्मनासम्परिष्वक्तः' (बृ.४/३/२१) 'अथ य एषोऽन्तरक्षिणि' (छा.१/७/५) इत्यासु श्रुतिसु ब्रह्मणि सेतुत्वस्य परिच्छिन्नत्वस्य सम्परिष्वक्तत्वस्य, भिन्नत्वस्य च व्यपदेशेभ्यः [तस्मात् सद्वितीयं

ब्रह्म इति सिद्धम्, पूर्वपक्ष सूत्रमिदम्] ।

## सू०— सामान्यात्तु ॥ ३२ ॥

पद०—सामान्यात्, तु ।

पदा०- अत्र सूत्रे तु शब्दः पूर्वपक्षनिरासार्थः, सामान्यात् = मृद्दार्वादिमये हि सेतु शब्दो रूढो लोके, न तथा ब्रह्मणः सेतुत्वम्, एवञ्च सेतोर्जल व्यवस्थापकत्वं यथा तथास्य ब्रह्मणो जगन्मर्यादा व्यवस्थापकत्वेन लोकप्रसिद्ध सेतुसाम्यात् [ सेतुत्वव्यपदेशो न तु वस्तुत इति नोक्त सेतुत्व निबन्धन दोष इत्यर्थः ] ।

## सू०- बुद्ध्यर्थः पादवत् ॥ ३३ ॥

पद०- बुद्ध्य् र्थः पादवत् ।

पदा०-[ 'चतुष्पाद ब्रह्म' इत्यादि श्रुतौ उन्मान व्यपदेशः] बुद्ध् यर्थः = उपासनार्थः, [निर्विशेषस्य बुद्धिस्थत्वायोगादुपाधिकल्पनाद्वाराबुद्धिस्थत्वादस्योन्मानव्यपदेशो न मुख्योभवितुमर्हति] पादवत् = यथा ब्रह्मप्रतीकस्य मनसो वाग्घ्राण चक्षुश्श्रोत्रणामुपासनार्थं पादत्वेन व्यपदेशस्तद्वदित्यर्थः ।

## सू०- स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥

पद०- स्थानविशेषात्, प्रकाशादिवत् ।

पदा०- प्रकाशादिवत् = यथा सौरालोकादेरङ्गुल्याद्युपाधियोगादुपजातभेदस्योपशमात् सम्बन्धव्यपदेश उपाधिभेदाच्च भेदव्यपदेशस्तद्वत्, स्थानविशेषात् = स्थानमुपाधिबुद्ध्यादिः, तद्विशेषात् [प्राप्तस्य भेदस्योपाध्युपशमात् य उपशमः, स एव प्राज्ञेन आत्मना जीवस्य सुषुप्तौ सम्बन्धः, इत्युपाध्यपेक्षयोपचर्यते । अक्ष्यादित्यपुरुषयोर्भेदव्यपदेशोऽप्यक्ष्यादित्यरूपस्थानविशेषापेक्षयोपचर्यते, न मुख्यतः, इत्यर्थः] ।

## सू०- उपपत्तेश्च ॥ ३५ ॥

पद०- उपपत्तेः, च ।

पदा०- [न वास्तविको जीवपरयोः सम्बन्धः सुषुप्तौ भवति, कुतः?] उपपत्तेः = 'स्वमपीतो भवति' इति स्वरूपस्यैव सम्बन्धत्वव्यपदेशोपपत्तेः, च = एवम्, [भेदोपि न मुख्यः, श्रुतिसहस्रविरोधादित्यर्थः] ।

## सू०- तथान्यप्रतिषेधात् ॥ ३६ ॥

पद०— तथा, अन्यप्रतिषेधात् ।

पदा०— [यथा सेतुत्वादिहेतुभ्यो नान्यवस्तुविज्ञानम्] तथा = तेन प्रकारेण ['आत्मैवाधस्तात्' इत्यादिवाक्यैः] अन्यप्रतिषेधात् = अन्यस्य वास्तुनो निषेधात् [अद्वितीयमेव ब्रह्म, इत्यर्थः] ।

**सू०- अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥**

पद०— अनेन, सर्वगतत्वम्, आयामशब्दादिभ्यः ।

पदा०— अनेन = सेतुत्वादिव्यपदेशेषु मुख्यत्वस्य वस्त्वन्तरस्य च प्रतिषेधेन, [ब्रह्मणः सर्वगतत्वं सिद्धम्' तथा] आयामशब्दादिभ्यः = 'आकाशवत् सर्वगतश्च नित्यः, इत्यादिव्यापकत्ववाचकशब्दादिभ्यः, अपि, [सर्वगतत्वं सिद्धम्, आदिशब्देन नित्यः सर्वगतः स्थाणुः इत्यादिः ग्राह्यः] ।

अधिकरणसार

वस्त्वन्यद् ब्रह्मणो नो वा विद्यते ब्रह्मणोऽधिकम् ।
सेतुत्वोन्मानवत्त्वाच्च सम्बन्धाद् भेदवत्त्वतः ॥ १ ॥
धारणात्सेतुतोन्मानमुपास्त्यै भेदसंगती ।
उपाध्युद्भवनाशाभ्यां नान्यदन्यनिषेधतः ॥ २ ॥

## ८- फलाधिकरणम् ३८—४१

### सू०- फलमत उपपत्तेः ॥ ३८ ॥

पद०- फलम्, अतः, उपपत्तेः ।

पदा०- अतः = अस्मात् परमेश्वारात्, फलम् = [सर्वस्य जन्तोर्भवितु- मर्हति, कुतः ? ] उपपत्तेः = क्षणिकत्वात् कर्मणः फलासम्भवे- नेश्वरफलदातृत्वसम्भवात् ।

### सू०- श्रुतत्वाच्च ॥ ३९ ॥

पद०- श्रुतत्वात्, च ।

पदा०- च = अपि, श्रुतत्वात् = 'स वा एष महानज आत्मान्नादो वसु- दानः' (बृ० ४/४/२४) इत्यादिनेश्वरस्यैव फलहेतुत्वस्द श्रुत- त्वात् [ईश्वरः फलदाता इत्यर्थः ।

### सू०- धर्मं जैमिनिरत एव ॥ ४० ॥

पद०- धर्मम्, जैमिनिः, अतः, एव ।

पदा०- [यतः श्रुत्युपपत्तिभ्यामीश्वरं फलदातारं मन्मते सिद्धान्ती] अत एव = आभ्यामेव श्रुत्युपपत्तिभ्याम्, धर्मम् = यागादिकम् [फलदातारम्] जैमिनिः = तन्नामकाचार्यो मन्यते ।

सू०- पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

पद०- पूर्वम्, तु, बादरायणः, हेतुव्यपदेशात् ।

पदा०- तुशब्दः पूर्वोक्तशङ्कानिवर्तकः । पूर्वम् = पूर्वोक्तम् [ईश्वरं फलदातारम्], बादरायणः = एतन्नामकाचार्यः [मन्यते, कुतः ?] हेतुव्यपदेशात् = 'एष ह्येव साधु कर्म कारयति' (कौषी० ३/९), 'अन्नादो वसुदानः' (बृ० ४/४/२४) इति श्रुत्या 'लभते च ततः कामान्' इत्यादिस्मृत्या चेश्वरस्य धर्माधर्मयोस्तत्फले च हेतुत्वेन कथनात् इत्यर्थः ।

अधिकरणसार

कर्मैव फलदं यद्वा कर्माराधित ईश्वरः ।
अपूर्वावान्तरद्वारा कर्मणः फलदातृता ॥ १ ॥
अचेतनात्फलासूतेः शास्त्रीयात्पूजितेश्वरात् ।
कालान्तरे फलोत्पत्तेर्नापूर्वपरिकल्पना ॥ २ ॥

॥ इति तृतीयाध्यायस्य द्वितीय पादः समाप्तः ॥

ॐ विज्ञानमानन्दं ब्रह्म

# ब्रह्मसूत्र-तृतीयोऽध्यायः तृतीयः पादः

[अस्मिन् पादे परापरब्रह्मविद्यागुणोपसंहारविवरणम्]

## १- सर्ववेदान्तप्रत्ययाधिकरणम् सू० १–४

**सू०- सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥**

**पद०**– सर्ववेदान्तप्रत्ययम्, चोदनाद्यविशेषात् ।

**पदा०**-सर्ववेदान्तप्रत्ययम् = सर्वैर्वेदान्तैः प्रत्ययं प्रतीयमानान्युपासनानि न भिद्यन्ते । कुतः, चोदनाद्यविशेषात् = आदिपदेन संयोग-रूपसमाख्या गृह्यन्ते । तत्र यथा सर्वशाखासु 'अग्निहोत्रं जुहुयात्' इति चोदनाया अविशेषात् नित्याग्निहोत्रमेकमेव । तथा 'यो ह वै ज्येष्ठं च श्रेष्ठं च प्राणं वेद' इत्यादिचोद-नायाः छन्दोगानां वाजसनेयिनां चाविशिष्टत्वात् एकैव प्राणविद्या सर्वेषां शाखिनामिति गम्यते । यः प्राणोपासकः सः 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' इति फलसंयोगस्य सर्वत्राविशिष्टत्वाच्च न विद्याभेदः । ज्येष्ठत्वादिगुणकप्राण-

स्योपास्यरूपस्य सर्वत्राविशिष्टत्वाच्च तथा प्राणविद्येति समाख्यायाः सर्वत्राविशिष्टत्वाच्च न विद्याभेद इति सिद्धम् ।

**सू०- भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥**

पद०- भेदात्, न, इति, चेत्, न, एकस्याम्, अपि ।

पदा०- ननु वाजसनेयिनः पञ्चाग्निविद्यायाः 'तस्याग्निरेवाग्नि-र्भवति' इति षष्ठं प्रसिद्धाग्निमुपास्यत्वेनामनन्ति, छन्दोगास्तु 'पञ्चाग्नीन्वेद' इति । तथा च रूपभेदाददामिक्षावाजिनया-गयोरिव शाखाद्वये पञ्चाग्निविद्यायाः भेदो, नैक्यमिति चेत्, न । यत एकस्यामपि विद्यायामयं रूपभेद उपपद्यते । तथाहि -ये द्युलोकादयः पञ्चाग्नयो वाजसनेयशाखायामुक्ताः, त एव छान्दोग्ये प्रत्यभिज्ञायन्ते, तथा च न विद्याभेदो युक्तः, । न च षष्ठाग्नितदभावाभ्यां भेदः, एकस्मिन्नेवातिरात्रे षोडशि-ग्रहणतदभावयोर्दर्शनात् ।

**सू०-स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

पद०– स्वाध्यायस्य, तथात्वे, हि, समाचारे, अधिकारात्, च, सववत्, च, तन्नियमः ।

पदा०- स्वाध्यायस्यैव = शिरोव्रताख्यधर्मोऽङ्गं न विद्यायाः । कुतः, तथात्वेन हि समाचारे = वेदव्रतोपदेशग्रन्थे शिरोव्रतमपि स्वाध्यायाङ्गत्वेनाथर्वणिकाः समामनन्ति । अधिकाराच्च = नैतच्चीर्णव्रतोऽधीते' इत्यत्रत्यादविकृतविषयादेतच्छब्दात्, चकारादधीत इत्यध्ययनशब्दाच्च शिरोव्रतमध्ययनस्यैवाङ्गम् । तत्र दृष्टान्तः सववच्च = यथा सवाः सप्त होमाः सौर्यादयः शतौदनान्ताः शाखान्तरोक्तत्रेताग्न्यनभिसम्बन्धात्, एकाग्नीनामाथर्वणिकानामेव सम्बध्यन्ते, तद्वत्तन्नियमः = मुण्डकाध्ययन एव तस्य शिरोव्रतस्य नियमः । तस्मात्सर्वत्र विद्यैक्यमनवद्यम् ।

## सू०- दर्शयति च ॥ ४ ॥

पद०– दर्शयति, च ।

पदा०- 'सर्वे वेदा यत्पदमामनन्ति' इति वाक्यं निर्गुणस्य ब्रह्मणो वेद्यस्य सर्ववेदान्तेषु एकत्वेन तद्विद्यायाः सर्वत्रैकत्वं दर्शयति ।

तथा वाजसनेयके सगुणस्य ब्रह्मणो वैश्वानरस्य प्रादेशमात्रत्वेन संपादितस्य छान्दोग्ये सिद्धवदुपादानम् 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति, तदपि सर्वत्र वैश्वानरविद्याया एकत्वं दर्शयति। एवं च सगुणस्य निर्गुणस्य वा ब्रह्मण एकत्वेन सर्वत्र श्रूयमाणत्वात् तत्तद्विद्याया एकत्वम्। तथा शस्त्रविशेषरूपोक्थादीनामेकत्वेन सर्वत्र श्रूयमाणत्वात् इदमवगम्यते- तदुपासनानामपि ऐक्यमिति। तत्समभिव्याहारादितरेषामप्युपासनानामभेद इति सिद्धम्।

अधिकरणसार

सर्ववेदेष्वनेकत्वमुपास्तेरथवैकता।
अनेकत्वं कौथुमादिनामधर्मविभेदतः ॥ १ ॥
विधिरूपफलैकत्वादेकत्वं नाम न श्रुतम्।
शिरोव्रताख्यधर्मस्तु स्वाध्याये स्यान्न वेदने ॥ २ ॥

## २– उपसंहाराधिकरणम् सू०- ५

**सू०- उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥५॥**

पद०— उपसंहारः, अर्थाभेदात्, विधिशेषवत्, समाने, च ।

पदा०- समाने = उपासने गुणोपसंहारो युक्तः, । कुतः, अर्थाभेदात् = उपास्यगुणैर्निर्वर्त्यस्य उपासनारूपार्थस्य सर्वशाखास्वभिन्नत्वात् । तत्र दृष्टान्तः- विधिशेषवत् = यथाग्निहोत्रस्य सर्वत्रैक्यात् तच्छेषाणामुपसंहारः, तद्वदित्यर्थः ।

अधिकरणसार

एकोपास्तावनाहार्या आहार्या वा गुणाः श्रुतौ ।
अनुक्तत्वादनाहार्या उपकारः श्रुतैर्गुणैः ॥ १ ॥
श्रुतत्वादन्यशाखायामाहार्या अग्निहोत्रवत् ।
विशिष्टविद्योपकारः स्वशाखोक्तगुणैः समः ॥ २ ॥

## ३— अन्यथात्वाधिकरणम् सू० ६—८

### सू०- अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

पद०— अन्यथात्वम्, शब्दात्, इति, चेत्, न, अविशेषात् ।

पदा०- ननु, अन्यथात्वम् = न विद्यैक्यं भवितुमर्हति । कुतः, 'त्वं न उद्गाय' इति उद्गीथकर्तृत्वेन एकत्र, अन्यत्र 'तमुद्गीथमुपासांचक्रिरे' इत्युद्गीथत्वेन प्राणस्योपास्यत्वप्रतिपादकात्

शब्दात् इति चेत्, न = नैतावता विद्याभेदः। कुतः, देवासुरसंग्रामोपक्रमासुरात्ययाभिप्रायप्रभृतीनामुभयत्राविशेषात्। अतो विद्यैक्यमिति सिद्धम्।

सू०-न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७॥

पद०- न, वा, प्रकरणभेदात्, परोवरीयस्त्वादिवत्।

पदा०- नैव विद्यैक्यं युक्तम्। कुतः, प्रकरणभेदात् = एकत्र 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति उद्गीथावयव ओंकारे प्राणदृष्टिरुपदिश्यते, अन्यत्र तु 'त्वं न उद्गाय' इति या सकलैव सामभक्तिः तस्याः कर्तोद्गाता प्राणत्वेनावेद्यते इत्युपक्रमभेदात्। तत्र दृष्टान्तः-परोवरीयस्त्वादिवत् = यथा परमात्मदृष्ट्यध्याससाम्येऽपि 'स एष परोवरीयानुद्गीथः' इति परोवरीयस्त्वादिविशिष्टमुद्गीथोपासनम् अक्ष्यादित्यगतहिरण्यश्मश्रुत्वादिविशिष्टोद्गीथोपासनात् भिन्नम् तद्वत्।

सू०- संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥

पद०- संज्ञातः, चेत्, तत्, उक्तम्, अस्ति, तु, तद् अपि।

पदा०- ननु उद्गीथविद्येत्युभयत्र, संज्ञातः = संज्ञाया एकत्वाद्विद्यैक्य-

मिति चेत्, तदुक्तम् = 'न वा प्रकरण भेदात्…' इति सूत्रे। अस्ति तु तत् = संज्ञैकत्वं प्रसिद्धभेदानामप्यग्निहोत्रप्रभृतीनां काठकैकग्रन्थपठितानां काठकत्वसंज्ञैकत्वम्।

अधिकरणसार

एका–भिन्नाऽथवोद्गीथविद्या छान्दोग्यकाण्वयोः।
एका स्यान्नामसामान्यात्संग्रामादिसमत्वतः ॥ १ ॥
उद्गीथावयवोंकार उद्गातेत्युभयोर्भिदा।
वेद्यभेदेऽर्थवादादिसाम्यमत्राप्रयोजकम् ॥ २ ॥

## ४— व्याप्त्यधिकरणम् सू०– ९

## सू०– व्याप्तेश्च समञ्जसम् ॥ ९ ॥

पद०– व्याप्तेः, च, समञ्जसम्।

पदा०– ओंकारस्य ऋग्यजुःसामसु त्रिषु, व्याप्तेः = व्याप्तत्वात् क ओंकार उपास्य इत्यपेक्षायामुद्गीथावयवत्वेन ओंकारो विशेष्यते 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति। एवं च उद्गीथमित्योंकारस्य विशेषणमित्येव समञ्जसं = निरवद्यम्। सोऽत्र च शब्देन तु शब्दस्थाननिवेशिना अध्यासापवादैक्य–

पक्षाणां निरासः ।

अधिकरणसार

किमध्यासोऽथवा बाध ऐक्यं वाऽथ विशेष्यता ।
अक्षरस्यात्र नास्त्यैक्यं नियतं हेत्वभावतः ।। १ ।।
वेदेषु व्याप्त ओंकार उद्‍गीथेन विशेष्यते ।
अध्यासादौ फलं कल्प्यं संनिकृष्टांशलक्षणा ।। २ ।।

## ५- सर्वाभेदाधिकरणम् सू०- १०

## सू०- सर्वाभेदादन्यत्रेमे ।। १० ।।

पद०- सर्वाभेदात्, अन्यत्र, इमे ।

पदा०- अन्यत्र = वसिष्ठत्वादिगुणानामश्रवणस्थले, इमे = वसिष्ठत्वादयो गुणा उपसंहर्तव्याः । कस्मात्, सर्वाभेदात् = सर्वासु शाखासु प्राणसंवादस्थाया प्राणविद्यायः अभिन्नत्वात् । अत एव प्रकृतगुणानामिव अप्रकृतगुणानामपि बुद्धिस्थतया एवंशब्दग्राह्यत्वात् सर्वे सर्वत्रोपसंहर्तव्या इति सिद्धम् ।

अधिकरणसार

वसिष्ठत्वाद्यनाहार्यमाहार्यं वैवमित्यतः ।
उक्तस्यैव परामर्शादनाहार्यमनुक्तितः ।। १ ।।

प्राणद्वारेण बुद्धिस्थं वसिष्ठत्वादि तेन तत् ।
एवंशब्दपरामर्शयोग्यमाहार्यमिष्यते ॥ २ ॥

## ६- आनन्दाद्यधिकरणम् सू०- ११—१३

### सू०- आनन्दादयः प्रधानस्य ॥ ११ ॥

पद०— आनन्दादयः, प्रधानस्य ।

पदा०- प्रधानस्य = ब्रह्मणः, आनन्दादयः = आनन्दस्वरूपत्वादयो धर्माः सर्वत्र उपसंहर्तव्याः, सर्वशाखासु वेद्यस्य ब्रह्मण एकत्वेन विद्याया एकत्वादित्यर्थः ।

### सू०- प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

पद०— प्रियशिरस्त्वाद्यप्राप्तिः, उपचयापचयौ, हि, भेदे ।

पदा०- प्रियशिरस्त्वादिधर्माणां न सर्वत्र प्राप्तिः, हि = यस्मात्, प्रियमोदप्रमोदानन्दानां परस्परापेक्षया उपचयापचयौ = वृद्धिक्षयावनुभूयेते । तौ च धर्मिभेदे सत्येव स्वाभाविकौ भवतः, ब्रह्मणस्तु निर्भेदत्वात्, अतः न ते ब्रह्मणः स्वाभाविका धर्माः ।

### सू०- इतरे त्वर्थसामान्यात् ॥ १३ ॥

पद०— इतरे, तु, अर्थसामान्यात् ।

पदा०- उपास्यधर्मापेक्षया, इतरे तु = आनन्दादयो धर्माः ज्ञानैकफलाः सर्वत्रोपसंह्रियन्ते । कुतः, अर्थसामान्यात् = अर्थस्य प्रतिपाद्यस्य ब्रह्मणः, सामान्यात् = एकत्वादित्यर्थः ।

अधिकरणसार

नाऽऽहार्या उत वाऽऽहार्या आनन्दाद्या अनाहृतिः ।
वामनी सत्यकामादेरिवैतेषां व्यवस्थितेः ॥ १ ॥

विधीयमानधर्माणां व्यवस्था स्याद्यथाविधि ।
प्रतिपत्तिफलानां तु सर्वशाखासु सहृतिः ॥ २ ॥

## ७- आध्यानाधिकरणम् सू०— १४—१५

## सू०- आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

पद०— आध्यानाय, प्रयोजनाभावात् ।

पदा०- आध्यानाय = ध्यानसाध्यसाक्षात्काराय पुरुष एवार्थादिभ्यः सर्वेभ्यः परत्वेन प्रतिपाद्य-इत्येकमेव वाक्यम् । न त्विन्द्रियपरत्वे अर्थादयः प्रतिपाद्याः, प्रयोजनाभावात्— नहि इन्द्रियपरत्वेनार्थज्ञानं स्वतः किंचित्प्रयोजनं अस्यति । अतः

प्रतिपाद्यभेदाभावान्न वाक्यभेदः ।

## सू०- आत्मशब्दाच्च ॥ १५ ॥

पद०– आत्मशब्दात् च ।

पदा०- 'एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ।, इति प्रकृतपुरुषे आत्मशब्द-श्रवणाच्च आत्मपरमेवेद वाक्यम्,तस्यात्मनः श्रुत्या मानान्त-रावेद्यत्वरूपापूर्वत्वप्रतिपादनादिति भावः ।

अधिकरणसार

सर्वा परम्पराऽक्षादेर्ज्ञेया पुरुष एव वा ।
ज्ञेया सर्वा श्रुतत्वेन वाक्यानि स्युर्बहूनि हि ॥ १ ॥
पुमर्थः पुरुषज्ञानं तत्र यत्नः श्रुतो महान् ।
तद्बोधाय श्रुतोऽक्षादिर्वेद्य एकः पुमांस्ततः ॥ २ ॥

## ८- आत्मगृहीत्यधिकरणम् सू० १६—१७

## सू०- आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

पद०– आत्मगृहीतिः, इतरवत्, उत्तरात् ।

पदा०- अस्मिन् सृष्टिवाक्ये आत्मशब्देन परमात्मन एव गृहीतिः

= ग्रहणं नान्यस्य । इतरवत् = यथा इतरेषु सृष्टिवाक्येषु 'आत्मन आकाशः सम्भूतः' इत्यादिषु आत्मशब्देन परमात्मन एव ग्रहणम्, तद्वदत्रापि । कुतः, उत्तरात् = 'स ईक्षत लोकान्नु सृजा इति, 'स इमाँल्लोकानसृजत्' इति ईक्षणपूर्वकस्रष्टृत्वरूपोत्तरविशेषणादित्यर्थः । तच्च विशेषणं परमात्मन्येव मुख्यत्वेन श्रुत्यन्तरेष्ववगतमिति भावः ।

**सू०- अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥**

पद०– अन्वयात्, इति, चेत्, स्यात्, अवधारणात् ।

पदा०- लोकसृष्टिवाक्यपर्यालोचनया हिरण्यगर्भ एव वाक्यान्वयात् न परमात्मग्रहणं युक्तमिति चेत्, अत्राह- परमात्मन एव ग्रहणं युक्तं स्यात्, कुतः, अवधारणात् = 'आत्मा वा इदमेक एवाग्र आसीत्, इति सृष्टेः प्रागेकत्वावधारणस्य परमात्मयेव समञ्जसत्वात् ।

अधिकरणसार, प्रथम वर्णकम्

आत्मा वा इदमित्यत्र विराट् स्यादथवेश्वरः ।
भूतासृष्टेर्नेश्वरः स्याद् गवाश्वानयनाद्विराट् ॥ १ ॥

भूतोपसंहृतेरीशः स्यादद्वैतावधारणात् ।
अर्थवादो गवाद्युक्तिर्ब्रह्मात्मत्वं विवक्षितम् ॥ २ ॥

अधिकरणसार, द्वितीय वर्णकम्

द्वयोर्वस्त्वन्यदेकं वा काण्वच्छान्दोग्यषष्ठयोः ।
उभयत्र पृथग्वस्तु सदात्मभ्यामुपक्रमात् ॥ १ ॥
साधारणोऽयं सच्छब्दः स आत्मा तत्त्वमित्यतः ।
वाक्यशेषादात्मवाची तस्माद्वस्त्वेकमेतयोः ॥ २ ॥

## ९- कार्याख्यानाधिकरणम् सू०— १८

## सू०- कार्याख्यानादपूर्वम् ॥ १८ ॥

पद०— कार्याख्यानत्, अपूर्वम् ।

पदा०-अनग्नताचिन्तनमेवापूर्वं प्राणविद्याङ्गत्वेन विधेयम् नाचमनम् । कुतः, कार्याख्यानत् = 'द्वितो नित्यमुपस्पृशेत्' इत्यादिना स्मार्तविधिना सकलानुष्ठानाङ्गत्वेन शुद्ध्यर्थं कार्यं स्याचमनस्य प्राणविद्यायामपि विधिप्राप्तस्याख्यानादनग्नताविधानार्थमनुवादादित्यर्थः ।

अधिकरणसार

अनग्नबुद्ध्याचमने विधेये बुद्धिरेव वा ।
उभे अपि विधीयेते द्वयोरत्र श्रुतत्वतः ॥ १ ॥

स्मृतेराचमनं प्राप्तं प्रायत्यार्थमनूद्य तत् ।
अनग्नतामतिः प्राणविदोऽपूर्वा विधीयते ॥ २ ॥

## १०- समानाधिकरणम सू०- १९

## सू०- समान एवं चाभेदात् ॥ १९ ॥

पद०– समाने, एवम्, च, अभेदात् ।

पदा०- यथा भिन्नासु शाखासु विद्यैक्यं गुणोपसंहारश्च भवति । एवं समाने च = समानायामपि शाखायां भवितुं युक्तम्, कुतः, अभेदात् = उपास्यस्य मयोमयत्वादिगुणकस्योभयत्राप्यभेदेन प्रत्यभिज्ञानात् ।

### अधिकरणसार

शाण्डिल्यविद्या काण्वानां द्विविधैकविधाऽथवा ।
द्विरुक्तेरेकशाखायां द्वे विद्ये इति गम्यते ॥ १ ॥

एका मनोमयत्वादिप्रत्यभिज्ञानतो भवेत् ।
विद्याया विधिरेकत्र स्यादन्यत्र गुणे विधिः ॥ २ ॥

## ११- सम्बन्धाधिकरणम् सू० २०-२२

## सू०— सम्बन्धादेवमन्यत्रापि ॥ २० ॥

पद०– सम्बन्धात्, एवम्, अन्यत्र, अपि ।

पदा०- सम्बन्धात् = यथा शाण्डिल्यविद्यायामेकशाखायां विभागेनाधीतायामेकविद्यात्वसम्बन्धात [अन्योन्यं गुणोपसंहारः पूर्वमूक्तः] एवम् = तथा, अन्यत्राऽपि = भिन्नस्थलेऽपि [सत्यविद्यायां भवितुमर्हति, एकविद्यात्वसम्बन्धात्, इति पूर्वपक्षः] ।

## सूत्र- न वा विशेषात् ॥ २१ ॥

पद०– न, वा, विशेषात् ।

पदा०- न वा = नैव [उभयत्रोपसंहारो विधेयः, कुतः ?] विशेषात् = तस्याहरिति तस्याहमिति चायतनविशेषव्यपाश्रयेणैवोपनिषदोर्विशेषोपदेशात् [इति न पूर्वोक्तपूर्वपक्षस्यावसरः] ।

## सूत्र- दर्शयति, च ॥ २२ ॥

पद०– दर्शयति, च ।

पदा०- च = अपि, दर्शयति = 'तस्यैतस्य तदेव रूपम्' (छा० १/७/५) इत्यतिदेशः विद्यास्थले स्थानभेदान्नोपसंहार इति प्रतिपादयति, [अन्यथोक्तातिदेशो निरर्थक एव स्यात्, अतो नाम्नोर्व्यवस्थेति सिद्धम्] ।

अधिकरणसार

संहारः स्याद् व्यवस्था वा नाम्नोरहरहंत्विति ।
विद्यैकत्वेन संहारः स्यादध्यात्माधिदैवयो ॥ १ ॥

तस्योपनिषदित्येवं भिन्नस्थानत्वदर्शनात् ।
स्थितासीनगुरूपास्त्योरिव नाम्नोर्व्यवस्थितिः ॥ २ ॥

## १२- संभृत्यधिकरणम् सू०- २३

### सू०- संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

पद०— सम्भृतिद्युव्याप्ति, अपि, च, अतः ।

पदा०- सम्भृतिद्युव्याप्ति = 'वीर्या सम्भृतानि' इति या वीर्यसम्भृतिः = समृद्धिः, या च, 'दिवमाततान' इति द्युलोकव्याप्तिः अनयोः समाहारः सम्भृतिद्युव्याप्ति, तदपि [नोपसंहर्तव्यम्, कुतः?] अतश्च = अत एव = नाम्नोरिव व्यवस्थापकस्थानविशेषादेव ।

अधिकरणसार

आहार्या वा न वाऽन्यत्र संभृत्यादिविभूतयः ।
आहार्या ब्रह्मधर्मत्वाच्छाण्डिल्यादाववारणात् ॥ १ ॥

असाधारणधर्माणां प्रत्यभिज्ञाऽत्र नास्त्यतः ।
अनाहार्या ब्रह्ममात्रसम्बन्धोऽतिप्रसञ्जकः ॥ २ ॥

## १३- पुरुषविद्याधिकरणम् सू०- २४

**सूत्र-पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥२४॥**

पद०- पुरुषविद्यायाम्, इव, च, इतरेषाम् अनाम्नानात् ।

पदा०- पुरुषविद्यायामिव = यथा पैङ्गिनां पुरुषविद्यायाम् [पुरुषो यज्ञत्वेन कल्पितः तदीयमायुस्त्रेधा विभज्य सवनत्वेन कल्पितम् तथा] इतरेषाम् = तैत्तिरीयकाणाम् [पुरुषविद्यायाम्] अनाम्नानात् = अकथनात् [कस्यचिदेव गुणविशेषस्योपलब्धौ सत्यामपि बहुगुणभेदेन विद्यैक्याभावात् न तैत्तिरीयके धर्मा उपसंहर्तव्या इति ] ।

### अधिकरणसार

पुम्विद्यैका विभिन्ना वा तैत्तिरीयक- ताण्डिनोः ।
मरणावभृथत्वादि साम्यादेकेति गम्यते ॥ १ ॥
बहुना रूपभेदेन किंचित्साम्यस्य बाधनात् ।
न विद्यैक्यं तैत्तिरीये ब्रह्मविद्याप्रशंसनात् ॥ २ ॥

## १४- वेधाद्यधिकरणम् सू०- २५

### सू०- वेधाद्यर्थभेदात् ॥ २५ ॥

पद०- वेधादि, अर्थभेदात् ।

पदा०- ['सर्वं प्रविध्य' (अथर्व० ३०) इत्यादिमन्त्राणां 'देवा ह वै सत्रं निषेदुः' इत्यादि प्रवर्ग्यकर्मणाञ्च विद्यासु नोपसंहारः; कुतः ?] वेधाद्यर्थभेदात् = वेधाद्यर्थानाम् = 'सर्वं प्रविध्य' इत्यादिमन्त्रप्रकाशितानामर्थानामाभिचारिककर्मादिसमवेतानाम्, भेदात् = विद्यासु असमवेतत्वात् ।

अधिकरणसार

वेधमन्त्रप्रवर्ग्यादि विद्याङ्गमथवा न तु ।
विद्यासंनिधिपाठेन विद्याङ्गे मन्त्रकर्मणी ॥ १ ॥
लिङ्गेनान्यत्र मन्त्राणां वाक्येनापि च कर्मणाम् ।
विनियोगात्संनिधिस्तु बाध्योऽतो नाङ्गता तयोः ॥ २ ॥

## १५- हान्यधिकरणम् सू०- २६

### सू०- हानौ तूपायनशब्दशेषत्वात् कुशाछन्दःस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

पद०— हानौ, तु, उपायनशब्दशेषत्वात्, कुशाछन्दःस्तुत्युपगानवत्, तत्, उक्तम् ।

पदा०— (सूत्रवर्तितुशब्दः कैवल्यवाचकः, तथा च] हानौ तु = केवल-हानौ [श्रुतायां सत्यां ताण्ड्याथर्वणवाक्यद्वये त्यक्तयोरपि पुण्यपापयोरुपादानं कार्यम्, कुतः ?] उपायनशब्दशेषत्वात् = 'तत्सुकृतदुष्कृते विधूनुते (कौ० १/४) इति कौषीतकी- रहस्ये हानसन्निधौ श्रूयमाणस्य हानशब्देनापेक्षितस्योपादानार्थको-पायनशब्दस्य हानं प्रति शेषत्वावगमात् । अश्वरोमदृष्टा-न्तेन विधूतयोः पुण्यपापयोः परत्रावस्थानसापेक्षत्वात् परैरुपायनमावश्यकमिति भावः । अपेक्षितस्यान्यशाखास्थस्या-न्यत्रोपसंहार आवश्यक इत्यत्र निदर्शनमाह-कुशाच्छन्दः-स्तुत्युपगानवत् = कुशावत्, छन्दोवत्, स्तुतिवदुपगानवत्, इत्यर्थः। [तत्र सम्मतिमाह] तद् उक्तम् = 'प्रतिषेधे विकल्पः स्यात्' इत्यस्मिन् सूत्रे जैमिनिना पूर्वकाण्डे प्रतिपादितम्—अथवा वर्णकान्तरमनुरुध्येदं सूत्रमन्यथा व्याख्येयम्—तथाहि- हानौ तु = हानावेव [विधूननशब्दो भवितुमर्हति, कथम् ?] उपा-

यनशब्दशेषत्वात् = उपायनशब्दस्य सन्निधौ पठितस्य विधूननशब्दस्य उपायनशब्दं प्रति अङ्गत्वात् । विधूननशब्दस्य तल्लक्षकत्वे = हानलक्षकत्वे निदर्शनमाह• कुशाच्छन्दस्तुत्युपगानवदिति । अयमर्थः—यथा कुशादिस्थले शाखान्तरीयविशेषश्रवणं निर्णायकम्, तद्वदत्रापि कुत्रचिद्विधूननशब्दसामीप्ये प्रतीयमानमुपायनं सर्वत्र विधूननस्य हानलक्षकत्वे प्रमितिजनकमिति, तदुक्तमित्यस्य पूर्ववदेव व्याख्या ।

अधिकरणसार– प्रथमवर्णकः

उपायनमनाहार्यं हानायाऽऽह्रियतेऽथवा ।
अश्रुतत्वादनाक्षेपाद्विद्याभेदाच्च नाऽऽहृतिः ॥ १ ॥

विद्याभेदेऽप्यर्थवाद आहार्यः स्तुतिसाम्यतः ।
हानस्य प्रत्यभिज्ञानादेकविंशादिवादवत् ॥ २ ॥

अधिकरणसार– द्वितीयवर्णकः

विधूननं चालनं स्याद्धानं वा चालनं भवेत् ।
दोधूयन्ते ध्वजाग्राणीत्यादौ चालनदर्शनात् ॥ १ ॥

हानमेव भवेद्वाक्यशेषेऽन्योपायनश्रवात् ।
कर्त्रा न ह्यपरित्यक्तमन्यः स्वीकर्तुमर्हति ॥ २ ॥

## १६– साम्परायाधिकरणम् सू० २७–२८

### सू०- सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

पद०– साम्पराये, तर्तव्याभावात्, तथा हि, अन्ये ।

पदा०- साम्पराये = देहत्यागात्प्राक् परलोकसाधनीभूतविद्याकाले [एव कर्महानिस्वीकरणं युक्त्या पूर्णम्, कुतः ?] तर्तव्याभावात् = विरजा–नदी- तरणानन्तरं पुण्यपापकर्मणस्तर्तव्यस्य प्राप्तव्यस्य फलान्तरस्याभावात् । हि = यतः, तथा = तेन प्राकारेण, अन्ये = शाखिनः ताण्ड्यादयः जीवदशायामेव कर्महानिम् 'अश्व इव रोमाणि' (छा० ८/१३/१) इत्यादिना प्रतिपादयन्ति ।

### सू०- छन्दत उभयाविरोधात् ॥ २८ ॥

पद०– छन्दतः, उभयाविरोधात् ।

पदा०- छन्दतः = स्वेच्छातः [विद्यानुष्ठानं जीवत एवेति तत्फलभूतः कर्मक्षयोऽपि जीवत एव युक्तः, सति हेतौ कार्यविलम्बायोगात् । ननु विद्याकर्मक्षययोः किमिति निमित्त– नैमित्तिकभावोऽङ्गीकार्यः ? इत्याह] उभयाविरोधात् = कौषीतकि-ताण्डि-

श्रुत्योरुभयोरविरोधात् इत्यर्थः ।

अधिकरणसार

कर्मत्यागो मार्गमध्ये यदि वा मरणात्पुरा ।
उत्तीर्य विरजां त्यागस्तथा कौषीतकीश्रुतेः ॥ १ ॥
कर्मप्राप्यफलाभावान्मध्यं साधनवर्जनात् ।
ताण्डिश्रुतेः पुरात्यागो बाध्यः कौषीतकीक्रमः ॥ २ ॥

## १७–गतेरर्थवत्त्वाधिकरणम् सू०- २९–३०

### सू०-गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥२९॥

पद०– गतेः, अर्थवत्त्वम्, उभयथा, अन्यथा, हि, विरोधः ।

पदा० गतेः = देवयानस्य पथः,अर्थवत्त्वम् = प्रयोजनवत्त्वम्, उभयथा = विभागेन [भवितुमर्हति = क्वचित् सगुणविद्यायाम् देवयानमार्गोऽस्ति निर्गुणविद्यायां क्वचिन्नास्तीत्यर्थः] अन्यथा हि = सर्वत्र देवयानमार्गोपसंहारे हि विरोधः = 'विद्वान् पुण्यपापे विधूय' (मु० ३/१/३) इत्यादिना विरोधः [स्यात् इति भावः] ।

### सू०-उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३०॥

पद०– उपपन्नः, तल्लक्षणार्थोपलब्धेः, लोकवत् ।

पदा०- [गतेः = देवयानस्य उभयथाभावः] उपपन्नः = युक्तियुक्तः [कुतः ? ] तल्लक्षणार्थोपलब्धेः = सा = गतिः लक्षणं = कारणं यस्य सगुणविद्याफलस्य पर्य्यङ्कस्थब्रह्मप्राप्तिरूपस्य स तल्लक्षणार्थः, तस्य उपलब्धेः = श्रुतिषु प्रत्यभिज्ञानात्, [अतः सगुणविद्यायां मार्गोऽर्थवान्, न निर्गुणविद्यायाम्, लोकवत् = यथा लोके सेतुवासिनां गङ्गाप्राप्त्यै मार्गोऽपेक्षितः न गङ्गास्थानाम् तद्वत्] ।

अधिकरणसार.

उपास्तिबोधयोर्मार्गः समो यद्वा व्यवस्थितः ।
सम एवोत्तरो मार्ग एतयोः कर्महानवत् ॥ १ ॥
देशान्तरफलप्राप्त्यै युक्तो मार्ग उपास्तिषु ।
आरोग्यवद् बोधफलं तेन मार्गो व्यवस्थितः ॥ २ ॥

## १८–अनियमाधिकरणम् सू०– ३१

## सूत्र–अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

पद०– अनियमः, सर्वासाम्, अविरोधः, शब्दानुमानाभ्याम् ।

पदा०- सर्वासाम् = सगुणोपासनानाम् [मार्गस्य] अनियमः = नियमा-

भावः, [ननु अनियमस्वीकारे प्रकरणेन विरोधः स्यादिति, चेत् ? अस्ति] अविरोधः = विरोधस्य अभावः, [कुतः ?] शब्दानुमानाभ्याम् = 'तद्य इत्थं विदुः' (छा० ५/१०/१) 'शुक्ल कृष्णे गतीह्येते' (गी० ८/२६) इत्यादि श्रुतिस्मृतिभ्याम् [हेतुभ्याम् इत्यर्थः] ।

अधिकरणसार

मार्गः श्रुतस्थलेष्वेव सर्वोपासिषु वा भवेत् ।
श्रुतेष्वेवप्रकरणाद् द्विःपाठोऽस्य वृथाऽन्यथा ॥ १ ॥
प्रोक्तो विद्यान्तरे मार्गो ये चेम इति वाक्यतः ।
तेन बाध्यं प्रकरणं द्विःपाठश्चिन्तनाय हि ॥ २ ॥

## १९- यावदधिकाराधिकरणम् सू०- ३२

### सू०-यावदधिकारमवस्थितिराधिकारिकाणाम्॥३२॥

पद०— यावदधिकारम्, अवस्थितिः, आधिकारिकाणाम् ।

पदा०• [अपान्तरतमः प्रभृतीनाम्] आधिकारिकाणाम् = अधिकार सम्पन्नानाम्—लोकव्यवस्थाहेतुष्वधिकारेषु परमेश्वरेण नियुक्तानां सम्यग्दर्शनतः प्रक्षीणकर्मणाम्, यावदधिकारम् = याव-

प्रारब्धकर्म अवस्थितिः--अवस्थानम् (भवतीत्यर्थः) ।

अधिकरणसार

ब्रह्मतत्त्वविदां मुक्तिः पाक्षिकी नियताऽथवा ।
पाक्षिक्यपान्तरतमः प्रभृतेर्जन्मकीर्तनात् ॥ १ ॥

नानादेहोपभोक्तव्यमीशोपास्तिफलं बुधाः ।
भुक्त्वाऽधिकारीपुरुषा मुच्यन्ते नियता ततः ॥ २ ॥

## २०— अक्षरध्यधिकरणम् सू० ३३

### सू०- अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्या-मौपसदवत्तदुक्तम् ॥ ३३ ॥

पद०— अक्षरधियाम्, तु, अवरोधः, सामान्यतद्‌भावाभ्याम्, औपस-दवत्, तत्, उक्तम् ।

पदा०-अक्षरधियाम = अक्षरे ब्रह्मणि द्वैतनिषेधधियाम् [सर्वत्र निषेध श्रुतिषु] अवरोधः = उपसंहारः [युक्ततरः कुतः?] सामान्य-तद्‌भावाभ्याम् = द्वैतनिरासेन ब्रह्मप्रतिपादनस्य सर्वत्र सामा-न्यम्–समानत्वम्, प्रतिपाद्यस्य तस्य ब्रह्मणः सर्वत्र भावः –एकत्वेन प्रत्यभिज्ञानत्वम्– ताभ्याम् हेतुभ्याम् [इत्यर्थः

तत्र दृष्टान्तं प्रवक्ति] औपसदवत् = यथा जामदग्न्ये अहीने पुरोडाशिनीषूपसत्सु चोदितानामौपसदानामध्वर्युकर्तृक पुरोडाशशेषाणां मन्त्राणां यत्र क्वचिच्छ्रुतानामप्यध्वर्युणा सम्बन्धः, तथाऽक्षरप्रमितिशेषाणां निषेधानां यत्र क्वचिच्छ्रुतानामप्यक्षरेण सर्वत्र सम्बन्ध इत्यर्थः। तदुक्तम् = जैमिनिना प्रथमे काण्डे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेद संयोगः' (जैं० सू० ३/३/८) इतिः।

अधिकरणसार

निषेधानामसंहारः संहारो वा न संहृतिः।
आनन्दादिवदात्मत्वं नैषां संभाव्यते यतः ॥ १ ॥
श्रुतानामाहृतानां च निषेधानां समा यतः।
आत्मलक्षणता तस्माद्दाढ्यीयायस्तूपसंहृतिः ॥ २ ॥

## २१—इयदधिकरणम् सू०- ३४

## सू०- इयदामननात् ॥ ३४ ॥

पदा०- ['द्वा सुपर्णा सयुजा' (मु० ३/१/१) तथा 'ऋतं पिबन्तौ' (कठ. ३/१) इत्यनयोर्मन्त्रयोर्न विद्या भेदः, कुतः ? इयदामननात् =

इयतः- परिच्छिन्नस्य द्वित्वावच्छिन्नस्य उभयत्रापि भेदः विघटन द्वारा आमननात् = कथनात् इत्यर्थः ।

अधिकरणसारः

पिबन्तौ द्वा सुपर्णेति द्वे विद्ये अथवैकता ।
भोक्तारौ भोक्त्रभोक्तारावितिविद्ये उभे इमे ॥ १ ॥
पिबन्तौ भोक्त्रभोक्तारावित्युक्तं हि समन्वये ।
इयत्ताप्रत्यभिज्ञानात् विद्यैकामन्त्रयोर्द्वयोः ॥ २ ॥

## २२- अन्तरात्वाधिकरणम् सू०—३५-३६

## सूत्र-अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

पद०- अन्तरा, भूतग्रामवत्, स्वात्मनः ।

पदा०- [पूर्वस्माद् सूत्राद् आमननादित्येकदेशस्यात्रानुवृत्तिर्विधेया तथा च 'यत्साक्षादपरोक्षाद् ब्रह्म' (बृ० ३/४/१) 'य आत्मा सर्वान्तरः' (बृ०३/५/१) इति ब्राह्मणद्वयेऽपि] स्वात्मनः = स्वप्राज्ञस्य, अन्तरामननात् = सर्वान्तरामननात [विद्यैक्यं विज्ञेयम्, तत्र निदर्शनमाह] भूतग्रामवत् = यथा 'एको देवः (श्वे० ६/११) इत्यादिश्रुत्यन्तरे सर्वेषु भूत ग्रामेषु सर्वान्तरः

एकैवात्माऽऽम्नायते तद्वदनयोरित्यर्थः ।

**सूत्र- अन्यथा भेदानुपपत्तिरिति चेन्नोपदे-शान्तरवत् ॥ ३६ ॥**

पद०- अन्यथा, भेदानुपपत्तिः, इति, चेत्, न, उपदेशान्तरवत् ।

पदा०- अन्यथा = विद्याभेदानङ्गीकारे, भेदानुपपत्तिः = भेदस्य— आम्नानभेदस्याभ्यासस्य अनुपपत्तिः = उपपत्त्यभावः [प्रयोजनाभावात्] इति चेन्न = उक्तप्रकारेण कश्चिदाशङ्केत तदा तन्न चारु, (यतः) उपदेशान्तरवत् = छान्दोग्ये तत्त्वमसीत्युपदेशे नवकृत्वोऽभ्यस्यमानेऽपि न विद्याभेदो न वानुपपत्तिस्तद्वत् [प्रकृतेऽपि न विद्याभेदो न वोक्तानुपपत्तिरित्यर्थः] ।

अधिकरणसार

विद्याभेदोऽथ विद्यैक्यं स्यादुषस्तकहोलयोः ।<br>
समानस्य द्विराम्नानाद्विद्याभेदः प्रतीयते ॥ १ ॥<br>
सर्वान्तरत्वमुभयोरस्ति विद्यैकता: ततः ।<br>
शङ्का विशेषनुत्त्यै द्विः पाठस्तत्त्वमसीतिवत् ॥ २ ॥

## २३-व्यतिहाराधिकरणम् सू०-३७

**सू०-व्यतिहारो विंशिषन्ति हीतरवत् ॥ ३७ ॥**

पद०— व्यतिहारः, विंशिषन्ति, हि, इतरवत् ।

पदा०- व्यतिहारः = 'तद्योऽहम्' (ऐ० २/४/१) इत्याद्युक्तः [अत्रोपासनार्थमुपदिश्यते] इतरवत् = यथा इतरे सर्वात्मत्वादयः उपासनार्थमुच्यन्ते तद्वत् । हि = यतः [तथाऽऽम्नातारः 'त्वमहमस्म्यहम्' इत्यादिना] विंशिषन्ति = प्रतिपादयन्ति ।

अधिकरणसार

व्यतिहारे स्वात्मरव्योरेकधा धीरुतद्विधा ।
वस्त्वैक्यादेकधैक्यस्य दार्ढ्याय व्यतिहारधीः ॥ १ ॥
ऐक्येऽपिव्यतिहारोक्त्याधीर्द्वेधेशस्यजीवता ।
युक्त्योपास्त्यै वाचनिकी मूर्तिवद्दार्ढ्यमार्थिकम् ॥ २ ॥

## २४– सत्याद्यधिकरणम् सू० ३८

## सू०- सैव हि सत्यादयः ॥ ३८ ॥

पद०— सा, एव, हि, सत्यादयः ।

पदा०- [या इयमनन्तरविद्या] सा एव = सत्यविद्यैव, [कुतः ? हि शब्दो हेतौ, तथा च 'तद्यत् तत्सत्यम्' (बृ० ५/५/२) इत्यादिना प्रकृतस्यैव उपास्यस्य हिरण्यगर्भस्याऽऽकर्षणात् हेतोः, नहि

उपास्याभेदे विद्याया भेदो युक्ततरः, तस्माद्विद्यैक्यात् सर्वे]
सत्यादयः = सत्यप्रभृतयो गुणाः (उपसंहर्तव्या इति भावः] ।

अधिकरणसार

द्वे सत्यविद्ये एका वा यक्षरव्यादि वाक्ययोः ।
फलभेदादुभे लोकजयात्पापहतेः पृथक् ॥ १ ॥
प्रकृताकर्षणादेका पापघातोऽङ्गधीफलम् ।
अर्थवादोऽथवा मुख्यो युक्तोऽधिकृतिकल्पकः ॥ २ ॥

## २५- कामाद्यधिकरणम् सू०- ३९

**सू०- कामादीतरत्र तत्र चाऽऽयतनादिभ्यः ॥ ३९॥**

पद०- कामादि, इतरत्र, तत्र, च, आयतनादिभ्यः ।

पदा०-कामादि = सत्यकामत्वादि गुणग्रामः, इतरत्र = बृहदारण्यके [उपसंहर्तव्यः, यच्च सर्ववशित्वादिकम्, तदपि तत्र छान्दोग्ये उपसंहर्तव्यम्, कुतः ?] आयतनादिभ्यः = उभयत्राविशिष्टेभ्यः हृदयायतन सेतुव्यपदेशादिभ्यो हेतुभ्यः ।

अधिकरणसार

असंहृतिः संहृतिर्वा व्योम्नोर्दहरहार्दयोः ।
उपास्यज्ञेयभेदेन तद्गुणानामसंहृतिः ॥ २ ॥

उपास्त्यै क्वचिदन्यत्र स्तुतये चास्तु संहृतिः ।
दहराकाश आत्मैव हृदाकाशोऽपि नेतरः ॥ २ ॥

## २६- आदराधिकरणम्, सू० ४०-४१

### सू०—आदरादलोपः ॥ ४० ॥

पद०— आदरात्, अलोपः ।

पदा०- [भोजनलोपे अग्निहोत्रस्य] अलोपः = लोपाभावः [कुतः?] आदरात् = पूर्वोऽतिथिभ्योऽश्नीयात्' इति जाबालश्रुत्या पूर्वभोजनस्य प्राथम्यरूपधर्मलोपमसहमानया प्राणाग्निहोत्रे आदरकरणात् । अतोऽलोपइतिपूर्वपक्षः ।

### सू०— उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

पद०— उपस्थिते, अतः, तद्वचनात् ।

पदा०- उपस्थिते = भोजने उपस्थिते, अतः = अस्मादेव भोजनद्रव्यात् [प्राणाग्निहोत्रं कार्यम्, अनुपस्थिते तु अग्निहोत्रस्य लो एव, कुतः ?] तद्वचनात् = 'तद्यद् भक्तं प्रथम' (छा० ५/१९/१) इति वचनादित्यर्थः, [आदरवचनन्तु भोजनप्राप्तिदशायां बोध्यम् ।

अधिकरणसार

न लुप्यते लुप्यते वा प्राणाहुतिरभोजने ।
न लुप्यतेऽतिथेः पूर्वं भुञ्जीतेत्यादरोक्तितः ॥ १ ॥

भुज्यर्थीनोपजीवित्वात्तल्लोपे लोप इष्यते ।
भुक्तिपक्षे पूर्वभुक्तावादरोऽप्युपपद्यते ॥ २ ॥

## २७- तन्निर्धारणाधिकरणम् सू०- ४२

### सू०- तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥४२॥

पद०- तन्निर्धारणानियमः, तद् दृष्टेः, पृथक्, हि अप्रतिबन्धः, फलम् ।

पदा०- तन्निर्धारणानियमः = तेषाम्–कर्माङ्गश्रितानां निर्धारणानाम्–उपासनानाम्, अनियमः = नित्यवदनुष्ठानाभावः [कुतः ?] तद् दृष्टेः = तस्य– अनियमस्य दृष्टेः– 'तेनोभौ कुरुतः, (छा० १/१/१०) इति श्रुतौ दर्शनात्, [उपासनानां पृथक् फल॰ श्रवणाद् हि न नित्यवदनुष्ठानमित्याह] पृथग्घ्यप्रतिबन्ध फलम् = हि–यस्मात् कर्मफलतः पृथगेव अप्रतिबन्धः 'यदेव विद्यया करोति' इति वीर्यवत्तरत्वात्मककर्मसमृद्धिरूपं फलम्– परि–

णाम:, उपलभ्यते = प्राप्यते [अतो न कर्माङ्गत्वमुपासनानामिति भाव:] ।

अधिकरणसार

नित्या अङ्गावबद्धा: स्यु: कर्मस्वनियता उत ।
पर्णवत्क्रतुसम्बन्धो वाक्यान्नित्यास्ततो मता: ॥ १ ॥
पृथक् फलश्रुतेर्नैता नित्या गोदोहनादिवत् ।
उभौ कुरुत इत्युक्त कर्मोपास्त्यनुपासिनो: ॥ २ ॥

## २८– प्रदानाधिकरणम्, सू०- ४३

## सूत्र- प्रदानवदेव तदुक्तम् ॥ ४३ ॥

पद०– प्रदानवत्, एव, तत्, उक्तम् ।

पदा०- प्रदानवत् = 'यथेन्द्राय राज्ञे, इतीन्द्रदेवताया एकत्वेऽपि राजाधिराजादिगुणभेदन तद्विशिष्टदेवताभेदात् पुरोडाशानां प्रदानस्य प्रक्षेपस्य भेद: तद्वत् [एकस्यामपि विद्यायां वायुप्राणयो: स्वरूपाभेदेऽपि आध्यात्मिकाद्यवस्थाभेदेन गुणभेदात्– प्रयोगभेद इति] तदुक्तम्–'नाना वा देवता, इत्यादिना जैमिनिना।

अधिकरणसार

एकीकृत्य पृथग्वा स्यात्द्वायुप्राणानुचिन्तनम् ।
तत्त्वाभेदात्तयोरेकीकरणेनानुचिन्तनम् ॥ १ ॥

अवस्थाभेदतोऽध्यात्ममधिदैवं पृथक् श्रुतेः ।
प्रयोगभेदो राजादिगुणकेन्द्रप्रदानवत् ॥ २ ॥

## २९- लिङ्गभूयस्त्वाधिकरणम् सू० ४४–५२

### सू०– लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥

पद०– लिङ्गभूयस्त्वात्, तत्, हि, बलीय, तद् अपि ।

पदा०-[वाजसनेयकेऽग्निरहस्ये उक्ताः अग्नयः स्वतन्त्रा एव कुतः ?] लिङ्गभूयस्त्वात् = 'यत् किञ्चेमानि भूतानि' इत्यादि स्वातन्त्र्यप्रतिपादकानां लिङ्गानाम्– प्रमाणानाम् भूयस्त्वात्– आधिक्येन सत्त्वात् । तद्धि = लिङ्गप्रमाण हि [प्रकरणापेक्षया] बलीयः = बलवत् तदपि = वलीयस्त्वमपि [पूर्वकाण्डे श्रुति– लिङ्गेत्यादि सूत्रे भगवता जैमिनिनोक्तम् इति] ।

### सू० पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत् ॥ ४५ ॥

पद०– पूर्वविकल्पः, प्रकरणात्, स्यात्, क्रिया, मानसवत् ।

पदा०- [संकल्पात्मका मनश्चिदादयोऽग्नयः न स्वतन्त्राः, अपि तु] प्रकरणात् = प्रकरणप्रामाण्यात् पूर्वविकल्पः = पूर्वस्य-'इष्टकाभिरग्निं चिनुते' इति प्राक्तनस्य प्रकृतस्य क्रियामयस्याग्नेरयं विकल्पः-सङ्कल्पात्मकोऽग्निः, क्रिया = क्रियामय एव, स्यात् = भवति। तत्र दृष्टान्तमाह, मानसवत् = 'मनोग्रहं गृह्णाति' इत्येवंरूपेण विश्रुतो यथा द्वादशाहे मानसग्रहो द्वादशाहान्तःपातिनो दशमस्याह्नोऽङ्गम्, तथेमेऽग्नयः प्रकृतकर्मण शेषभूताः इत्यर्थः।

## सू०- अतिदेशाच्च ॥ ४६ ॥

पद०- अतिदेशात् च।

पदा०- च = अपि च, अतिदेशात् = मानसिकाग्नीनाम् मध्ये 'एकैक एव तावान्यावानसौ पूर्वः, इत्यादिना पूर्ववर्तीष्टकाचिताग्निना साम्योपदेशात् [क्रियाशेषत्वमेवोक्ताग्नीनामित्यर्थः]।

## सू०- विद्यैव तु निर्धारणात् ॥ ४७ ॥

पद०- विद्या, एव, तु, निर्धारणात्।

पदा०- अत्र तु शब्दः पूर्वोक्तसूत्रद्वयाशङ्कितशङ्कानिरासार्थकः, विद्या = विद्यात्ममका [एते मनश्चिदाद्यग्नयः स्वतन्त्रा ]एव [कुत ?]

निर्धारणात् = 'ते हैते विद्याचित एव' इत्यादिनाऽवधारणात् ।

**सूत्र- दर्शनाच्च ॥ ४८ ॥**

पद०– दर्शनात्, च ।

पदा०-दर्शनात् = मनश्चिदादीनां स्वातन्त्र्यबोधकस्य लिङ्गस्य प्रागुक्तस्य विलोकनात्, च = अपि [ते स्वतन्त्रा एव इत्यर्थः] ।

**सूत्र- श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥**

पद०– श्रुत्यादिबलीयस्त्वात्, च, न, बाधः ।

पदा०- [श्रुत्यादीत्यत्रादिना लिङ्गवाक्ययोरुपग्रहः तथा च] श्रुत्यादिबलीयस्त्वात् = श्रुत्यादीनाम्-श्रुतिलिङ्गवाक्यानाम् बलीयस्त्वात्-अधिकबलशालित्वात्, च = अपि, न बाधः = न बलहीनेन कर्म प्रकरणेन मन आदीनां स्वातन्त्र्यबाधः [इति भावः]।

**सू०- अनुबन्धादिभ्यः प्रज्ञान्तर पृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥**

पद०– अनुबन्धादिभ्यः, प्रज्ञान्तरपृथक्त्ववत्, दृष्टः, च, तत्, उक्तम् ।

पदा०- [अनुबन्धादिभ्यः, इत्यत्रादिना अतिदेशो गृह्यते, बहुवचनोपपत्तिश्च प्राक्तनसूत्रोक्तश्रुत्यादीनादाय बोध्या, अनुबन्धः 'ते मनसैवाधीयन्त' इत्यादिना मन आदिवृत्तिषु कर्माङ्गत्व

सम्पादनम्, तथा च] अनुबन्धादिभ्यः = अनुबन्धादिहेतुभ्यः [मनश्चिदादीनां स्वातन्त्र्यम्, तत्र दृष्टान्तः] प्रज्ञान्तर पृथक्त्ववत् = यथा प्रज्ञान्तराणाम्- शाण्डिल्यादिविद्यानाम् पृथक्त्वम्–स्वातन्त्र्यं तद्वत्, [ननु मनश्चिदादीनां स्वातन्त्र्ये प्रकरणादुत्कर्षे को दृष्टान्तः? इत्यत आह] दृष्टश्च = राजसूयं प्रस्तुत्य श्रुताया अवेष्टेर्ब्राह्मणादिकर्तृकायाराणमात्रकर्तृक-राजसूयप्रकरणादुत्कर्षो दृष्टः, तद्वदिहापि [अग्नीनां कर्म–प्रकरणादुत्कर्ष इति] तदुक्तम् = तद्धि प्रथमे काण्डे 'क्रत्वर्थायामिति' (जै. सू. ११/४/१०) इत्यादिनोक्तम् ।

## सू०— न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ५१ ॥

पद०– न, सामान्यात्, अपि, उपलब्धेः, मृत्युवत्, नहि, लोकापत्तिः ।

पदा०- [मनश्चित्प्रभृतिनाम्] सामान्यात् अपि = मानसत्वस्य समानत्वेऽपि, न = क्रियाङ्गत्वम् न स्वीकार्यम् [कुतः?] उपलब्धेः = पूर्वोक्तश्रुत्यादिभ्यो हेतुभ्यः स्वातन्त्र्यस्योपलब्धत्वात् [तत्र दृष्टान्तमाह] मृत्युवत् = 'स वा एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः' इति 'अग्निर्वै मृत्युः' (बृह०३/२/१०) इति

चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युः शब्दस्य प्रयोगे नात्यान्तिकी समानत्वापत्तिः, (यथा वा] नहि लोकापत्तिः = 'असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्' (छा० ५/४/१) इत्यादिषु स्थलेषु समानत्वेऽपि समित्प्रभृतीनां नहि लोकस्य-द्यु-लोकस्य आपत्तिः—अग्नित्वापत्तिः (अपि तु परस्परं वैजात्यम्, तद्वत् मानसमानसिकाग्न्योर्मानसिकत्व साम्यश्रौत्येऽपि मिथो वैजात्यमेवेत्यर्थः] ।

## सू०—परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५२ ॥

पद०— परेण, च, शब्दस्य, ताद्विध्यम्, भूयस्त्वात्, तु, अनुबन्धः ।

पदा०- परेण = मानसाग्निब्राह्मणात् उत्तरेण ब्राह्मणेन [साम्तात्] शब्दस्य = मध्यस्य ब्राह्मणस्य, ताद्विध्यम् = तद्विधत्वम्-यथा चिचेऽग्नौ लोक दृष्टिरूप स्वतन्त्र विद्या विधित्वम् (तथा प्रकृतेऽपि मानसिकाग्नीनां स्वतन्त्रविद्याविधित्वम् एवं प्रतीतं भवति च = एवम् [पूर्वोणाऽपि ब्राह्मण ग्रन्थेन पुरुषोपासना लक्षणान्यानधीन विद्याविधित्वमेव यथा प्रतीयते [ तथा प्रकृतेऽपि मध्यस्थे ब्राह्मणे बोध्यम्, ननु कथं तर्हि क्रियाग्निता

सार्धं पाठः ? इत्यत आह] भूयस्त्वात्तु अनुबन्धः = तु शब्द शङ्कां निरस्यति, भूयस्त्वात् - मानसाग्नि विद्यायां सम्पाद- नीयानां कर्माङ्गानां बहुत्वात् [विद्यायाः क्रियाग्निना] अनु- बन्धः सार्धं पाठः इति ।

अधिकरणसार

कर्मशेषाः स्वतन्त्रा वा मनश्चित्प्रमुखाग्नयः ।
कर्मशेषाः प्रकरणाल्लिङ्गं त्वन्यार्थदर्शनम् ।। १ ।।

उन्नेयविधिगाल्लिङ्गादेव श्रुत्या च वाक्यतः ।
बाध्यं प्रकरणं तस्मात्स्वतन्त्रं वह्निचिन्तनम् ।। २ ।।

## ३०- एकात्म्याधिकरणम् सू०- ५३-५४

## सूत्र- एक आत्मनः शरीरे भावात् ।। ५३ ।।

पद०- एके, आत्मनः, शरीरे, भावात् ।

पदा०- एके = केचन चार्वाकाः आत्मनः = शरीरातिरिक्तस्य प्राज्ञस्य [असत्त्वं मन्यन्ते, कुतः ?] शरीरे = देहे [सति उपलब्धेः] भावात् = सत्त्वात् [तदभावे चाऽभावादित्यन्वयव्यतिरेकाभ्यां तस्या उपलब्धेः शरीरधर्मतयाऽतिरिक्तस्याऽऽत्मनोऽसिद्धेरिति पूर्वपक्षः] ।

**सू०-व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ।५४।**

पद०— व्यतिरेकः, तद्भावाभावित्वात्, न, तु, उपलब्धिवत् ।

पदा०- [आत्मनो देहादभिन्नत्वम्]न तु = नास्त्येव (किन्तु) व्यतिरेकः = भिन्नत्वम् [एव, कुतः?] तद्भावावित्वात् = तस्यशरीरस्य मरण समये वर्तमानत्वेऽपि ज्ञानरूपात्मधर्मस्यासत्त्वात् [तत्र दृष्टान्तः]उपलब्धिवत् = यथा भूतानामुपलब्धिर्न तेषां धर्मोऽपि तु ततो व्यतिरिच्यते, तथा भौतिकदेहोपलब्धिर्न तद्धर्मस्ततो व्यतिरिच्यत एव [उपलब्धिश्चात्मेत्यनर्थान्तरं वेदान्तिना-मितिभावः ] ।

अधिकरणसार

आत्मा देहस्तदन्यो वा चैतन्यं मदशक्तिवत् ।
भूतमेलनजं देहे नान्यत्राऽऽत्मा वपुस्ततः ॥ १ ॥
भूतोपलब्धिर्भूतेभ्यो विभिन्ना विषयित्वतः ।
सैवाऽऽत्मा भौतिकाद्देहादन्योऽसौ परलोकभाक् ॥ २ ॥

## ३१—अङ्गावबद्धाधिकरणम् सू० ५५—५६

**सू०-अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ।।५५।।**

पद०– अङ्गावबद्धाः, तु, न, शाखासु, हि, प्रतिवेदम् ।

पदा०– [पूर्वपक्षनिरास एव सूत्रस्थतुशब्दस्य प्रयोजनम्] अङ्गावबद्धाः = अङ्गाश्रिताः [एता उपासनाः] प्रतिवेदम् = प्रत्येकवेदान्तेषु, शाखासु = स्वस्वशाखासु [च विद्यमानोद्गीथावलम्बना एव न भवन्ति, किन्तु अन्यशाखीयोद्गीथावलम्बना अपि, कुतः ?] हि = शब्दोऽयं हेत्वर्थकः तथा च 'उद्गीथमुपासीत्' (छ०१/१/१) इत्यादौ उद्गीथादिश्रुतेरविशेषात् हेतोरित्यर्थः।

## सू०—मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥

पद०– मन्त्रादिवत्, वा, अविरोधः ।

पदा०– [एकस्यां शाखायां विहितानामुद्गीथादीनामन्यस्यां शाखायामुदितेषूद्गीथादिषु प्राप्तेः] अविरोधः = विरोधाभावः, मन्त्रादिवत् = तण्डुलपेषणार्थमश्मादानमन्त्रस्य 'कुटरुरसि' इत्येकत्राम्नातस्य शाखान्तरेऽपि प्राप्तेरविरोधः, तद्वत् । सूत्रस्थ वा शब्दो दृष्टान्तप्रदर्शनरूपहेत्वन्तरप्रदर्शनार्थः ।

### अधिकरणसार

उक्थादिधीः स्वशाखाङ्गेष्वेवान्यत्रापि वा भवेत् ।
सांनिध्यात्स्वस्वशाखाङ्गेष्वेवासौ व्यवतिष्ठते ॥ १ ॥

उक्थोद्गीथादिसामान्यं तत्तच्छब्दैः प्रतीयते ।
श्रुत्या च संनिवेशाद्विस्त्रस्तोऽन्यत्रापि यात्यसौ ॥ २ ॥

## ३२—भूमज्यायस्त्वाधिकरणम् सू० ५७

### सूत्र–भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति॥५७॥

पद०– भूम्नः, क्रतुवत्, ज्यायस्त्वम्, तथा, हि, दर्शयति ।

पदा०- भूम्नः = समस्तोपासनस्य [एवात्र वाक्ये 'प्राचीनशाल औपमन्यवः (छा० ५/११/१) इत्यादौ] ज्यायस्त्वम् = प्राधान्येन प्रतिपाद्यत्वम् [न व्यस्तोपासनानाम् अपि] क्रतुवत् = दर्शपूर्णमासादेः क्रतोः यथा साङ्गप्रधानस्यैकस्यैव प्रयोगो विवक्ष्यते, 'न व्यस्तानामपि प्रयाजादीनां' तद्वत् [ननु भूम्न एव ज्यायस्त्वं कथम्? इत्यत आह] तथेत्यादि । हि = यतः, तथा = तेन प्रकारेण प्राचीनशालादिभिरुक्तानि व्यस्तोपासनानि निन्दित्वा कैकेयेन राज्ञा समस्तोपासनस्योक्तत्वादेकवाक्यता श्रुतिर्दर्शयति ।

अधिकरणसार

ध्येयो वैश्वानरांशोऽपि ध्यातव्यः कृत्स्न एव वा ।
अंशेषूपास्तिफलयोरुक्तेरस्त्यंशधीरपि ॥ १ ॥
उपक्रमावसानाभ्यां समस्तस्यैव चिन्तनम् ।
अंशोपास्तिफले स्तुत्यै प्रत्येकोपास्तिनिन्दनात् ॥ २ ॥

## ३३- शब्दादिभेदाधिकरणम् सू० ५८

## सू०- नाना शब्दादिभेदात् ॥ ५८ ॥

पद०-नाना, शब्दादिभेदात् ।

पदा०- नाना = एकाविद्या नास्ति [अपितु भिन्नैव, कुतः? ] शब्दादिभेदात् = 'वेद'उपासीत्' इत्यादि शब्दादिभेदात् [आदिना उपास्य गुणभेदात्' इत्यपि बोध्यम्] ।

### अधिकरणसार

न भिन्ना उत भिद्यन्ते शाण्डिल्यदहरादयः ।
समस्तोपासनश्रैष्ठ्याद् ब्रह्मैक्यादप्यभिन्नता ॥ १ ॥
कृत्स्नोपास्तेरशक्यत्वाद् गुणैर्ब्रह्म पृथक्कृतम् ।
दहरादीनि भिद्यन्ते पृथक्पृथगुपक्रमात् ॥ २ ॥

## ३४— विकल्पाधिकरणम् सू०-५९

## सू०- विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

पद०— विकल्पः, अविशिष्ट, फलत्वात् ।

पदा०- विकल्पः = सगुणविद्यानां विकल्पः (एव युक्तः, कुतः ?) अविशिष्टफलत्वात् = वेद्यसाक्षात्कारलक्षणाभिन्नफलत्वात् इत्यर्थः ।

अधिकरणसार

अहंग्रहेष्वनियमो विकल्पनियमोऽथवा ।
नियामकस्याभावेन याथाकाम्यं प्रतीयताम् ॥ १ ॥
ईशसाक्षात्कृतेस्त्वेकविद्ययैव प्रसिद्धितः ।
अन्यानर्थक्यविक्षेपो विकल्पस्य नियामकौ ॥ २ ॥

### ३५—काम्याधिकरणम् सू०- ६०

## सू०- काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥

पद०— काम्याः, तु, यथाकामम्, समुच्चीयेरन्, न, वा, पूर्वहेत्वभावात् ।

पदा०- काम्यास्तु = अदृष्टद्वारा फलहेतवो विद्यास्तु, यथाकामम् = स्वेच्छानुसारम्, समुच्चीयेरन् = समुचित्य अनुष्ठीयेरन्, वा =

अथवा,न = न समुच्चीयेरन् (कुतः?) पूर्वहेत्वभावात् = पूर्वहेतोः- अविशिष्टफलस्य विकल्पप्रयोजकस्य अभावात्-असत्त्वाद् ।

अधिकरणसार

प्रतीकेषु विकल्पः स्याद्याथाकाम्येन वा मतिः ।
अहंग्रहेष्विवैतेषु साक्षात्कृत्यै विकल्पनम् ॥ १ ॥
देवोभूत्वेतिवन्नत्र काचित्साक्षात्कृतौ मितिः ।
याथाकाम्यमतोऽमीषां समुच्चयविकल्पयोः ॥ २ ॥

## २६-यथाश्रयभावाधिकरणम् सू०- ६१—६६

### सू०- (पूर्व०) अङ्गेषु यथाश्रयभावः ॥ ६१ ॥

पद०- अङ्गेषु, यथा, आश्रयभावः ।

पदा०- अङ्गेषु = कर्माङ्गोद्गीथाश्रितासुविद्यासु, यथाश्रयभावः = यथा ऋतुषु आश्रितानामङ्गानां समुच्चित्य अनुष्ठाननियमः, तथा प्रकृतेऽपि ययथाश्रभावः-समुच्चित्य अनुष्ठाननियमः ।

### सू०- (पूर्व०) शिष्टेश्च ॥ ६२ ॥

पद०-शिष्टेः, च ।

पदा०- च = अपि, शिष्टेः = शासनात्-विधानात्-विहितत्वाविशेषात् [अङ्गवत समुच्चयः] ।

## सूत्र- (पूर्व०) समाहारात् ॥ ६३ ॥

पदा०- समाहारात्—वेदान्तरोदितस्य प्रणवस्य वेदान्तरे उपसंहार-करणात् [अपि अङ्गानां समुच्चयः] ।

## सूत्र- (पूर्व०) गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥

पद०— गुणसाधारण्यश्रुतेः, च ।

पदा०- गुणसाधारण्यश्रुतेः = 'तेनेयं त्रयी विद्यावर्तते' (छा० १/१/९) इत्युद्गीथोपास्तौ गुणभूतस्योङ्कारस्य सर्वकर्मणि साधारण्य-श्रवणात्-साम्यप्रतिपादनात्, च = अपि [अङ्गाश्रितोपास्तीनां समुच्चयः] ।

## सू०-(सि०) न वा तत्सहभावाश्रुतेः ॥ ६५ ॥

पद०— न, वा, तत्सहभावाश्रुतेः ।

पदा०- तु शब्दापरपर्यायो (सूत्रस्थ) वा शब्दः शङ्काविच्छेदनार्थः । न = नास्ति [अङ्गाश्रितोपास्तीनामङ्गवत् समुच्चयनियमः, कुतः ?] तत्सहभावाश्रुतेः = 'ग्रहं वा गृहीत्वा' इत्यादिना यथा-ङ्गानां सहभावः श्रूयते, तद्वत् तासामुपासनानां सहभावस्य समुच्चयस्य अश्रुतेः—अश्रवणात् ।

## सू०- दर्शनाच्च ॥ ६६ ॥

पद०- दर्शनात्, च ।

पदा०- ['एव विद्ध वै ब्रह्मा' (छा० ४/१७/१०) इत्यादिश्रुतौ अङ्गाश्रितोपास्तीनाम् समुच्चयाभावस्य] दर्शनाच्च = दर्शनादपि [न तासां समुच्चयशङ्कावसरः] ।

### अधिकरणसारः

समुच्चयोऽङ्गबद्धेषु याथाकाम्येन वा मतिः ।
समुच्चितत्वादङ्गानां तद्बद्धेषु समुच्चयः ॥ १ ॥
ग्रहं गृहीत्वा स्तोत्रस्याऽऽरम्भ इत्यादिवन्नहि ।
श्रूयते सहभावोऽत्र याथाकाम्यं ततो भवेत् ॥ २ ॥

॥ तृतीयोऽध्यायः तृतीयः पादः इति ॥

# तृतीयाध्याये: चतुर्थः पादः

[अत्र निर्गुणविद्याया अन्तरङ्गवहिरङ्ग साधनविचारः]

## १ पुरुषार्थाधिकरणम् सू०- १—१७

### सू०- पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

पद०— पुरुषार्थः, अतः, शब्दात्, इति, बादरायणः ।

पदा०- अतः = अस्मात् औपनिषदात्मज्ञानात् स्वतन्त्रात्, पुरुषार्थः = मोक्ष. (सिद्ध्यति), इति = अनेन प्रकारेण, बादरायणः = आचार्योबादरायणः [मन्यते, कुतः ?] शब्दात् = 'तरति शोक-मात्मवित्' (छा० ७/१/३) इति श्रुतेः ।

### सू०-शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनि॥२॥

पद०— शेषत्वात्, पुरुषार्थवादः, यथा, अन्येषु, इति जैमिनिः ।

पदा०- [आत्मनः कर्तृत्वेन आत्मज्ञानस्यापि पर्णतावत् कर्मशेषात्म-द्वारा क्रत्वङ्गत्वम्] शेषत्वात् = फलशून्यत्वे सति कर्माङ्गा-श्रयत्वात्, [ननु 'तरति' इत्यादिश्रुत्या मोक्षलणफल श्रुतेर्विशेषणासिद्धोऽयम् हेतुरित्यत आह-पुरुषेत्यादिना] यथा =

यया रीत्या, अन्येषु = द्रव्यसंस्कारकर्मसु [अपापादि फलश्रुति-रर्थवादस्तथाऽत्रापि 'तरति' इत्यादि फलश्रुतिः] पुरुषार्थवादः, इति जैमिनिः = जैमिनिराचार्यो [मन्यते] ।

## सू०— आचारदर्शनात् ॥ ३ ॥

पदा०— आचारदर्शनात = 'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' (बृह० ३/१/१) इत्यादौ ब्रह्मविदां जनकादीनां विद्ययासह कर्माचारदर्शनात् [विद्यायाः कर्माङ्गत्वमित्यर्थः] ।

## सूत्र- तच्छ्रुते ॥ ४ ॥

पदा०- ['यदुव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा० १/१/१०) इति तृतीयाश्रुत्या] विद्याया तच्छ्रुतेः = तस्य कर्माङ्गत्वस्थ श्रुतेः-श्रवणात् इत्यर्थः ।

## सू०—समन्वारम्भणात् ॥ ५ ॥

पदा०समन्वारम्भणात् = 'तं विद्याकर्मणी समन्वारभेते' (बृ०४/४/२) इत्यनेन विद्याकर्मणोः साहित्यदर्शनाद् [अपि विद्यायाः कर्माङ्गत्वम्] ।

## सूत्र- तद्वतो विधानात् ॥ ६ ॥

पद०— तद्वतः, विधानात् ।

पदा०- तद्वतः = 'आचार्यकुलाद्वेदमधीत्य' (छा० ८/१५/१) इत्यादि श्रुत्या सम्पूर्णवेदार्थज्ञानयुक्तस्य, विधानात् = कर्म विधानात् (अपि कर्माङ्गत्वं विद्यायाः ] ।

## सू०- नियमाच्च ॥ ७ ॥

पद०— नियमात्, च ।

पदा०- च = अपि, नियमात् = 'कुर्वन्नेवेह' (ईशा. २) इत्यादिना यावज्जीव कर्माचार नियमात्[विद्यायाः कर्माङ्गत्वम्] ।

## सू0-अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्॥८॥

पद०— अधिकोपदेशात्, तु, वादरायणस्य, एवम्, तद् दर्शनात् ।

पदा०- अत्र सूत्रस्थस्तुशब्दः पूर्वपक्षनिरासार्थः [यदवादि पूर्वपक्षकर्त्रा तत्त्वज्ञानं कर्माङ्ग, फलशून्यत्वे सति कर्माङ्गाश्रयत्वात्, इति तन्न युक्तम् कुतः ? हेतौ विशेष्यस्याऽसिद्धेः कुतो विशेष्याऽसिद्धिः ? ]अधिकोपदेशात् = संसारिणो जीवात् अधिकस्य- अकर्तुरभोक्तुर्ब्रह्मण उपदेशात् वेदान्तेषु कथनात्, [ततश्च चिन्मात्रश्रयमेव तत्त्वज्ञानमिति भवति विशेष्यासिद्धिः, अत

एव तत्त्वज्ञानफलश्रुतिरपि नार्थवादः, तस्मात्] एवम् = तेन प्रकारेण बादरायणस्य-भगवतो बादरायणस्य [यन्मतं तत्तथैवावस्थितम्, न चाऽधिकोपदेशाऽसिद्धिः,] तद्दर्शनात् = तस्य चिन्मात्र ब्रह्मणः दर्शनात्—'यः सर्वज्ञः सर्वविद्' (मु. १/१/९) इत्यादि श्रुतिसहस्रेषु प्रतिपादनात् ।

## सू०- तुल्यं तु दर्शनम् ॥ ९ ॥

पद०- तुल्यम्, तु, दर्शनम् ।

पदा०- [तत्त्वज्ञानस्य अकर्मशेषत्वेऽपि] दर्शनम् = आचारदर्शनम्, तुल्यम् = समानम् [एव 'एतद्ध स्म वै तत् पूर्वे' (बृह. ३/५/१) इत्यादि श्रुतिः दर्शयति । सूत्रस्थ तु शब्दोऽकर्माङ्गलिङ्गदर्शनस्य प्राबल्यं सूचयति] ।

## सू०- असार्वत्रिकी ॥ १० ॥

पदा०- असार्वत्रिकी = 'यदेव विद्यया करोति' (छा० १/१/१०) इत्यादि श्रुतिः सर्वविद्या विषया न भवति [प्रकृतोद्गीथ विद्यामात्रपरत्वात्] ।

## सू०- विभागः शतवत् ॥ ११ ॥

पद०— विभागः, शतवत् ।

पदा०-विभागः = 'तं विद्याकर्मणी समन्वारभेते' (बृह०४/४/२) इत्यत्र 'विद्या अन्यं पुरुषम्, कर्म अन्यं पुरुषम्' इत्येवंरूपेण पार्थक्यम् [द्रष्टव्यम्] शतवत् = 'आभ्यां शतं दीयताम्' इत्युक्ते पञ्चाशतं पञ्चाशत् विभज्य दीयते, तद्वत् प्रकृतेऽपि ।

## सू०- अध्ययनमात्रवतः ॥ १२ ॥

पदा०- अध्ययनमात्रवतः = 'आचार्यकुलाद्वेदमधीत्य' इत्यादि वाक्ये वेदाध्ययनवत् एव [कर्म विधीयते, नोपनिषदात्मज्ञानवतः इत्यर्थः] ।

## सू०- नाविशेषात् ॥ १३ ॥

पद०— न, अविशेषात् ।

पदा०- न = कुर्वन्नेवेह कर्माणि' (ईशा. २) इत्यादि वाक्यं तत्त्वविद्विषयं न [भवति, कुतः ?] अविशेषात् = 'विद्वान् इति विशेषस्य अभावात् ।

## सू०— स्तुतयेऽनुमतिर्वा ॥ १४ ॥

पद० स्तुतये, अनुमतिः, वा ।

पदा०- वा = अथवा, अनुमतिः = इयं तत्त्वविदः कर्मानुज्ञा, स्तुतये = स्तुत्यै विज्ञेया, [स्तुतिश्च-जीवनपर्यन्त कर्मकर्तर्यपि त्वयि विदुषि विद्या सामर्थ्यात् कर्मलेपो न भवतीति] ।

## सू०—कामकारेण चैके ॥ १५ ॥

पद०— कामकारेण, च, एके ।

पदा०- च = अपि च, एके = केचन तत्त्वज्ञानिनः, कामकारेण = स्वेच्छया प्रजादिकं त्यक्तवन्तः [इति श्रूयते 'एतद्ध स्म वै तत् पूर्वे विद्वांसः प्रजां न कामयन्ते' [बृह. ४/४/२२) इत्यादिना,] सूत्रेणानेन तत्त्वज्ञानस्य कर्माङ्गत्वाभावे तत्त्वविदां स्वेच्छया प्रजादित्यागोलिङ्गं सूचितम् ।

## सूत्र- उपमर्दञ्च ॥ १६ ॥

पद०- उपमर्दम् च ।

पदा०- उपमर्दम् = क्रियानुष्ठानहेतुभूतस्य क्रियाकारक फलविभागस्य कृत्स्नस्याविद्याकल्पितस्य विद्याप्रभावेणाभावं 'यत्र त्वस्य सर्वमात्मैवाऽभूत्' (बृ. ४/५/१५) इत्यादिना समामनन्ति । च = अतः [ब्रह्मविद्यायाः कर्मविरोधीत्वाच्च न कर्माङ्गत्वम्] ।

## सू०- ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

पद०– ऊर्ध्वरेतःसु, च, शब्दे, हि ।

पदा०- च = अपि च, ऊर्ध्वरेतःसु = यतिषु [ब्रह्मविद्याऽवगता, अतोऽपि न कर्माङ्गं ब्रह्मविद्या, न च यत्याश्रमो न क्वापि श्रुतः इति वाच्यम्] शब्दे हि = हि- यतः, शब्दे- 'त्रयोधर्मस्कन्धाः' (छा. २/२३/१) इत्यत्र [श्रवणमस्ति यत्याश्रमस्य] ।

अधिकरणसार

क्रत्वर्थमात्मविज्ञानं स्वतन्त्रं वाऽऽत्मनो यतः ।
देहातिरेकमज्ञात्वा न कुर्यात्क्रतुगं ततः ॥ १ ॥
नाऽद्वैतधीः कर्महेतुर्हन्ति प्रत्युत कर्म सा ।
आचारो लोकसंग्राही स्वतन्त्रा ब्रह्मधीस्ततः ॥ २ ॥

## २–परामर्शाधिकरणम् सू०- १८–२०

## सू०-परामर्शं जैमिनिरचोदना चापवदति हि ॥१८॥

पद०– परामर्शम्, जैमिनिः, अचोदना, च, अपवदति, हि ।

पदा०- ['ब्रह्मसंस्थोऽमृतत्वमेति' (छा. २/२३/१) इति वाक्यम्] परामर्शम् = अन्धपरम्परान्यायप्राप्तसंन्यासस्य अनुवादकम्,

इति जैमिनिः = आचार्यो जैमिनिः [मन्यते, कुतः ?] हि = यतः, अचोदना = अस्मिन् वाक्ये लिङ्गादिकं नास्ति, च = अपि च, अपवदति = 'वीरहा वा एष' (तै. १/११/१) इत्यादि शास्त्रं संन्यासं प्रतिषेधति [अतोऽपि नास्ति संन्यासाश्रमः]।

**सू०- अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥**

पद०- अनुष्ठेयम्, बादरायणः, साम्यश्रुतेः।

पदा०- अनुष्ठेयम् = पारिव्राज्यस्यानुष्ठानं कार्यम् [इत्येव] बादरायणः = आचार्यो बादरायणः [मन्यते, कुतः?] साम्यश्रुते. = 'त्रयो-धर्मस्कन्धाः' (छा. २/२३/१) इत्यत्र श्रुतौ श्रुत्यन्तरविहितानां भिन्नानामाश्रमाणामेतद्वाक्यानुवाद्यगार्हस्थे साम्यश्रवणा-दित्यर्थः।

**सू०- विधिर्वा धारणवत् ॥ २० ॥**

पद०- विधिः, वा, धारणवत्।

पदा०- वा = अथवा, विधिः = त्रयोधर्मेत्यादिवाक्ये आश्रमाणाम् विधिः [एव नानुवादः, न चानेकाश्रमविधाने वाक्यभेदः शङ्कनीयः, आश्रमाणामपूर्वत्वेन विधेरावश्यकत्वेन वाक्यभेदस्येष्टत्वात्,

एकवाक्यताप्रतीतावप्यपूर्वार्थविधौ दृष्टान्तः] धारणवत् = 'अधस्तात समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र स्रुग्दण्डादधस्तात् समिद्धारणविध्येकवाक्यताप्रतीताव-प्युपरिधारणस्यापूर्वत्वादेकवाक्यताभङ्गेन विधिर्यथा कल्पित-स्तथेहापीत्यर्थः ।

अधिकरणसार (प्रथम वर्णक)

नास्त्यूर्ध्वरेताः किंवाऽस्ति नास्त्यसावविधानतः ।
वीरघातो विधेः क्लृप्तावन्धपङ्ग्वादिगा स्मृतिः ॥ १ ॥
अस्त्यपूर्वविधेः क्लृप्तेर्वीरहाऽनग्निको गृही ।
अन्धादेः पृथगुक्तत्वात्स्वस्थानां श्रूयते विधिः ॥ २ ॥

अधिकरणसार (द्वितीय वर्णक)

लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा न वा ।
यथावकाशं ब्रह्मैव ज्ञातुमर्हत्यवारणात् ॥ १ ॥
अनन्यचित्तता ब्रह्मनिष्ठाऽसौ कर्मठे कथम् ।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः ॥ २ ॥

## ३—स्तुतिमात्राधिकरणम् सू०- २१-२२

**सू०-स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥२१॥**

पद०– स्तुतिमात्रम्, उपादानात्, इति, चेत्, न, अपूर्वत्वात् ।

पदा०- [उद्गीथाद्युपासनेषु श्रूयमाणं 'स एषः रसानां रसतमः परमः' (छा. १/१/३) इत्यादिकं सर्वमपि वाक्यजातम्] स्तुतिमात्रम् = कर्माङ्गोद्गीथस्तुतिमात्रं [बोधयति कुतः? ] उपादानात् = शङ्का न युक्ता [कथम् ?] अपूर्वत्वात् = कर्माङ्गोद्गीथाद्युपास्तीनां रसतमत्वादिगुणानाञ्च मानान्तराप्राप्तत्वात् इत्यर्थः ।

## सू०– भावशब्दाच्च ॥ २२ ॥

पद०– भावशब्दात्, च ।

पदा०- च = अपि च, भावशब्दात् = उद्गीथमुपासीत,' सामोपासीत' इत्यादि विधायकशब्दात् [गुणविधायकमेव 'स एष रसानाम्' इत्यादिवाक्यमिति भावः ।

### अधिकरणसार

स्तोत्रं रसतमत्वादि ध्येयं वा गुणवर्णनात् ।
जुहूरादित्य इत्यादाविव कर्माङ्गसंस्तुतिः ॥ १ ॥

भिन्नप्रकरणस्थत्वान्नाङ्गविध्येकवाक्यता ।
उपासीतेतिविध्युक्तेर्ध्येयं रसतमादिकम् ॥ २ ॥

## ४–पारिप्लवाधिकरणम् सू० २३–२४

## सू०–पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥२३॥

पद०– पारिप्लवार्थाः, इति, चेत्, न, विशेषितत्वात् ।

पदा०- पारिप्लवार्थाः = अथ ह याज्ञवल्क्यस्येत्याद्याख्यायिकाः पारिप्लवाऽऽख्यकर्माङ्गानि इति चेत्, न = इत्येवं केनचित् शङ्क्येत तदा तथा नाऽऽशङ्कनीयम् [कुतः ?] विशेषितत्वात् = 'पारिप्लवमाचक्षीत' इत्युपक्रम्य 'मनुर्वैवस्वतो राजा' इत्यादिवाक्यशेषे केषाञ्चिदेव पारिप्लवशेषत्वेन विशेषितत्वात् [अश्वमेधे पुत्रादिपरिवृताय राज्ञे यन्नानाविधकथाकथनं तत् पारिप्लवाख्यं कर्म] ।

## सू०- तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

पद०– तथा, च, एकवाक्यतोपबन्धात् ।

पदा०- तथा च = एवञ्च [उक्तप्रणाल्या पारिप्लवार्थत्वाभावे सति सन्निधिबलात् विद्यास्तुत्यर्थत्वमाख्यायिकानां युक्तम्, कुतः ?]

एकवाक्यतोपबन्धात् = सन्निहितत्तद्विद्यैकवाक्यत्वदर्शनात् ।

अधिकरणसार

पारिप्लवार्थमाख्यानं किंवा विद्यास्तुतिः स्तुतेः ।
ज्यायोऽनुष्ठानशेषत्वं तेन पारिप्लवार्थता ॥ १ ॥
मनुर्वैवस्वतो राजेत्येवं तत्र विशेषणात् ।
अत्र विद्यैकवाक्यत्वभावाद्विद्यास्तुतिर्भवेत् ॥ २ ॥

## ५- अग्नीन्धनाद्यधिकरणम् सू०– २५

## सू०-अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥

पद०- अतः, एव, च, अग्नीन्धनाद्यनपेक्षा ।

पदा०- च = अपि च, अत एव = प्रथमाधिकरणोक्तात् स्वतन्त्रपुरुषार्थत्वादेव [ब्रह्मविद्यायाः] अग्नीन्धनाद्यनपेक्षा = स्वस्वाश्रमविहितकर्मानपेक्षा ।

अधिकरणसार

आत्मबोधः फले कर्मापेक्षो नो वा ह्यपेक्षते ।
अङ्गिनोऽङ्गेष्वपेक्षाय. प्रयाजादिषु दर्शनात् ॥२५॥
अविद्यातमसोर्ध्वंस्तौ दृष्टं हि ज्ञानदीपयोः ।
नैरपेक्ष्यं ततोऽत्रापि विद्या कर्मानपेक्षिणी ॥ २ ॥

## ६– सर्वापेक्षाधिकरणम् सू० २६-२७

### सू०-सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥

पद०– सर्वापेक्षा, च, यज्ञादिश्रुतेः, अश्ववत् ।

पदा०- [विद्यायः स्वोत्पत्तौ] सर्वापेक्षा = सर्वेषाम्–आश्रमकर्मणाम्, अपेक्षा = आवश्यकता [अस्ति, कुतः ?] च = यतः, यज्ञादि–श्रुतेः = 'विविदिषन्ति यज्ञेन' (वृ० ४/४/२२) इत्यादिना यज्ञादिकर्मणां विविदिषाद्वारा ज्ञानसाधनत्वश्रवणात्, [ननु मोक्षे कथं कर्मणामुपयोगो नास्तीत्यत आह] अश्ववत् = यथा अश्वो योग्यताबलेन रथचर्यायां विनियुज्यते न लाङ्गलादि–कर्षणे, तद्वत् [कर्मणां मोक्षे योग्यत्वाभावान्नापेक्षा इति भावः] ।

### सू०-शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥

पद०– शमदमाद्युपेतः, स्यात्, तथापि, तु, तद्विधेः, तदङ्गतया, तेषाम्, अवश्यानुष्ठेयत्वात् ।

पदा०- [यद्यपि 'विविदिषन्ति' (वृ. ४/४/२२) इत्यादौ वर्तमाना–

पदेशात् न विधित्वम्] तथापि = एवं सत्यपि [ब्रह्मज्ञानार्थी] शमदमाद्युपेतस्तु स्यात् = शमादियुक्तो भवेत्, [कुतः ?] तदङ्गतया = विद्याङ्गतया, तद्विधेः = 'तस्मादेवंविच्छान्तो दान्त उपरतः' (बृ. ४/४/२३) इत्यादिना, तेषाम् = शमादीनाम् विधानात्, [तेषाम्– विहितानाञ्च] अवश्यानुष्ठेयत्वात् = अवश्यानुष्ठातव्यत्वात् ।

अधिकरणसार

उत्पत्तावनपेक्षेयमुत कर्माण्यपेक्षते ।
फले यथाऽनपेक्षैवमुत्पत्तावनपेक्षता ॥ १ ॥
यज्ञशान्त्यादिसापेक्षं विद्याजन्म श्रुतिद्वयात् ।
हलेऽनपेक्षितोऽप्यश्वो रथे यद्वदपेक्ष्यते ॥ २ ॥

## ७ सर्वान्नानुमत्यधिकरणम्- सू० २८–३१

### सू०–सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥२८॥

पद०– सर्वान्नानुमतिः, च, प्राणात्यये, तद्दर्शनात् ।

पदा०– प्राणात्यये च = प्राणनिर्गमनकाले एव, सर्वान्नानुमतिः = 'न ह वाऽस्यानन्नं जग्धं भवति' (बृह. ६/१/२४) इत्यादिना सुरा-

वर्जसकलान्नस्य भक्षणानुज्ञा [कुतः ?] तद्दर्शनात् = चाक्रायणोपाख्याने उषस्तेश्चाक्रायणस्यापत्काल एव हि तस्य हस्तिपकोच्छिष्टकुल्माषभक्षणस्य दर्शनात् ।

## सू०— अबाधाच्च ॥ २९ ॥

पद०— अबाधात्, च ।

पदा०• अबाधात् = भक्ष्याभक्ष्यविभागशास्त्रस्याबाधात्, च-अपि ['न ह वा' [बृह. ६/१/२४) इत्यादि शास्त्रमर्थवादमात्रम् । ]

## सू०-अपि च स्मर्यते ॥ ३० ॥

पद०— अपि, च, स्मर्यते ।

पदा०- अपि च [आपत्काले विदुषोऽविदुषश्च सर्वान्नभक्षणम्] स्मर्यते = स्मृतावुच्यते— 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' 'मद्यं नित्यं ब्राह्मणो वर्जयेत् इति च ।

## सू०- शब्दश्चातोऽकामकारे ॥ ३१ ॥

पद०— शब्दः, च, अतः, अकामकारे ।

पदा०-अकामकारे च = स्वेच्छाकृतप्रवृत्तिनिरास एव, शब्दः = 'तस्मात्

ब्राह्मणः सुरां न पिबेत्' इत्येवंरूपः [श्रूयते] अतः = अस्मा-द्धेतोः [प्राणविदः सर्वान्नानुज्ञानमर्थवादमात्रम् इति भाव ]।

अधिकरणसार

सर्वाशनविधिः प्राणविदोऽनुज्ञाऽथवाऽऽपदि ।
अपूर्वत्वेन सर्वान्नभुक्तिर्ध्यातुर्विधीयते ॥ १ ॥
श्वाद्यन्नभोजनाशक्तेः शास्त्राच्चाभोज्यवारणात् ।
आपदि प्राणरक्षार्थमेवानुज्ञायतेऽखिलम् ॥ २ ॥

## ८- आश्रमकर्माधिकरणम् सू० ३२-३५

## सू०- विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

पद०- विहितत्वात्, च, आश्रमकर्म, अपि ।

पदा०- त्वर्थकश्चशब्दः पूर्वपक्षं व्यावर्तयति । अपि = अमुमुक्षुणाऽपि, आश्रमकर्म = आश्रमप्राप्तकर्मजातम् [अवश्यमनुष्ठेयम्, कुतः? ] विहितत्वात् = 'यावज्जीवम्' इत्यादिना शास्त्रेण कर्मजातस्य विधानात् ।

## सू०- सहकारित्वेन च ॥ ३३ ॥

पद०- सहकारित्वेन, च ।

पदा०-च = अपि च, सहकारित्वेन = कर्मणां चित्तशुद्धिद्वारा विद्योपजनने सहकारिकारणतया विद्यार्थत्वेन [नित्यानि कर्माणि अवश्यमनुष्ठेयानि, यज्ञादिश्रुत्या तदर्थत्वेन तेषां विहितत्वात्] ।

## सू०- सर्वथापि त एवोभयलिङ्गात् ।। ३४ ।।

पद०- सर्वथा, अपि, ते, एव, उभयलिङ्गात् ।

पदा०-ते एव = यज्ञादय एव, सर्वथापि = नित्यत्वेन विद्यार्थत्वेन च [अनुष्ठेयाः, कुतः ?] उभयलिङ्गात् = 'यज्ञेन विविदिषन्ति' (बृह० ४/४/२२) इति श्रुतिलिङ्गात् 'अनाश्रितः' इति स्मृतिलिङ्गाच्च ।

## सू०- अनभिभवं च दर्शयति ।। ३५ ।।

पद०- अनभिभवम्, च, दर्शयति ।

पदा०- च = अपि च, अनभिभवम् = ब्रह्मचर्यादिसाधनसम्पन्नस्य रागादिक्लेशैरनभिभवम् = अपराजयम्, ['एष ह्यात्मा न नश्यति (छा० ८/५/३) इत्यादिश्रुतिः] दर्शयति = प्रतिपादयति ।

अधिकरणसार

विद्यार्थमाश्रमार्थं च द्विः प्रयोगोऽथवा सकृत् ।
प्रयोजनविभेदेन प्रयोगोऽपि विभिद्यते ॥ १ ॥

श्राद्धार्थभुक्त्या तृप्तिः स्याद्विद्यार्थेताऽऽश्रमस्तथा ।
अनित्यनित्यसंयोग उक्तिभ्यां खादिरे मतः ॥ २ ॥

## ९- विधुराधिकरणम् सू० ३६-३९

### सू०- अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥

पद०- अन्तरा, च, अपि, तु, तद् दृष्टेः ।

पदा०- सूत्रस्थ-तु-शब्दः पूर्वपक्षव्यावृत्त्यर्थकः । अन्तरा = आश्रमं विना वर्तमानानाम् अपि, [ब्रह्मविद्यायामस्ति अधिकारः, कुतः ?] तद् दृष्टेः = तस्य-ब्रह्मविद्याधिकारस्याऽनाश्रमिणां रैक्वप्रभृतीनां श्रुतौ स्मृतौ च दर्शनात् ।

### सू०- अपि च स्मर्यते ॥ ३७ ॥

पद०- अपि, च, स्मर्यते ।

पदा०- अपि च = अन्यदपि, स्मर्यते = संवर्तप्रभृतीनां व्यावृत्ताश्रमाणां योगित्वं स्मर्यते ।

## सू०- विशेषानुग्रहश्च ॥ ३८ ॥

पद०- विशेषानुग्रहः, च ।

पदा०-च = अपि च, विशेषानुग्रहः = विशेषैः जपोपवासादिकर्मविशेषैः ज्ञानहेतुभिः रैक्वादीनामनाश्रमिणां विद्यायामनुग्रहः = अधिकारः [श्रूयते इत्यर्थः] ।

## सू०- अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥३९॥

पद०- अतः, तु, इतरत्, ज्यायः, लिङ्गात्, च ।

पदा०- अतस्तु = अनाश्रमित्वात्तु, इतरत् = आश्रमित्वम्, ज्यायः = शीघ्रमेव विद्यासाधनम् [कुतः ?] लिङ्गाच्च = 'तेनैति ब्रह्मवित्' (बृह० ४/४/९) इत्यादिश्रुतौ पुण्यकृत्त्वविशेषणरूपश्रुतिलिङ्गाच्च ।

अधिकरणसार

नास्त्यनाश्रमिणो ज्ञानमस्ति वा नैव विद्यते ।
धीशुद्ध्यर्थाश्रमित्वस्य ज्ञानहेतोरभावतः ॥ १ ॥
अस्त्येव सर्वसम्बन्धिजपादेश्चित्तशुद्धितः ।
श्रुता हि विद्या रैक्वादेराश्रमे त्वतिशुद्धता ॥ २ ॥

## १०— तद्भूताधिकरणम् सू०—४०

### सू०- तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥

पद०— तद्भूतस्य, तु, न, अतद्भावः, जैमिनेः, अपि नियमातद्रूपाभावेभ्यः ।

पदा०- तद्भूतस्य = प्राप्तोत्तमाश्रमस्य, अतद्भावः = उत्तमाश्रमात् प्रच्युतिः, न = न भवितुमर्हति, इति जैमिनेरपि = आचार्यस्य जैमिनेः, अपिशब्देन भगवतो बादरायणस्यापि च [सम्मतम्, कुतः ?] नियमातद्रूपाभावेभ्यः = नियमः— 'अरण्यमियादिति पदं ततो न पुनरेयात्' इति नियमः, अतद्रूपम्— प्रत्यवरोहबोधिकायाः श्रुतेरभावः, अभावः — शिष्टाचारस्याभावः, इत्येतेभ्यो हेतुभ्यः ।

#### अधिकरणसार

अवरोहोऽस्त्याश्रमाणां न वा, रागात्स विद्यते ।
पूर्वधर्मश्रद्धया वा यथाऽऽरोहस्तथैच्छिकः ॥ १ ॥
रागस्यातिनिषिद्धत्वाद्विहितस्यैव धर्मतः ।
आरोहनियमोक्त्यादेर्नावरोहोऽस्त्यशास्त्रतः ॥ २ ॥

## ११– आधिकारिकाधिकरणम् सू० ४१-४२

### सू०- न चाधिकारिकमपि पतनानुमाना– त्तदयोगात् ॥ ४१ ॥

पद०– न, च, आधिकारिकम्, अपि, पतनानुमानात्, तदयोगात् ।

पदा०- आधिकारिकमपि = अधिकारलक्षणसिद्धं गर्दभालम्भनरूपम् प्रायश्चित्तमपि, [नैष्ठिकस्य ब्रह्मचारिणः] न च = नास्ति, [कुतः? ]पतनानुमानात् = 'आरूढो नैष्ठिकं धर्मम्' इत्यादिना अनिवर्त्य–पातित्य- श्रुत्यनुमापकस्मरणात् तदयोगात् = तस्य- प्रायश्चित्तस्य, अयोगात्–असम्भवादिति [पूर्वपक्षः] ।

### सू०-उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥४२॥

पद०– उपपूर्वम्, अपि, तु, एके, भावम्, अशनवत्, तदुक्तम् ।

पदा०- [इदं न महापातकं, येन तदर्थं प्रायश्चित्तं न स्यात्]अपितु, एके = केचन आचार्याः, उपपूर्वम् = उपोपसर्गपूर्वकमुपपातकम् मन्यन्ते, [अतः उपकुर्वाणब्रह्मचारिण इव नैष्ठिकस्यापि उक्तस्य प्रायश्चित्तस्य, भावम् = सद्भावमिच्छन्ति, तत्र दृष्टान्तः] अशनवत् = यथा मधुमांसभक्षिणो ब्रह्मचारिणो व्रतलोपः,पुतः संस्कारश्च तद्वत्[ अतः प्रायश्चित्तस्य सद्भावो

युक्ततर एव] तदुक्तम् = तदेतत्- प्रमाणलक्षणे— पूर्वमीमांसायां 'समा विप्रतिपत्तिः स्यात्' (जै०सू० १/३/८) इत्यत्र उक्तम्— प्रतिपादितम् ।

अधिकरणसार

भ्रष्टोर्ध्वरेतसो नास्ति प्रायश्चित्तमथास्ति वा ।
अदर्शनोक्तेर्नास्त्येव व्रतिनो गर्दभः पशुः ॥ १ ॥
उपपातकमेवैतद् व्रतिनो मधुमांसवत् ।
प्रायश्चित्ताच्च संस्काराच्छुद्धिर्यत्नपरं वचः ॥ २ ॥

## १२—बहिरधिकरणम् सू०- ४३

## सू०- बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

पद०— बहिः, तु, उभयथा, अपि, स्मृतेः, आचारात्, च ।

पदा०- उभयथा अपि = कृतप्रायश्चित्ता अपि ते शिष्टैः बहिस्तु = बहिरेव [कार्याः, कुतः ?] स्मृतेः = 'प्रायश्चित्तं न पश्यामि,' 'आरूढपतितं दृष्ट्वा' इत्यादिनिन्दास्मृतेः, च = अपि च, आचारात् = शिष्टाचारात् ।

अधिकरणसार

शुद्धः शिष्टैरुपादेयस्त्याज्यो वा दोषहानितः ।
उपादेयोऽन्यथा शुद्धिः प्रायश्चित्तकृता वृथा ॥ १ ॥
आमुष्मिक्येव शुद्धिः स्यात्ततः शिष्टास्त्यजन्ति तम् ।
प्रायश्चित्ताद् दृष्टिवाक्यादशुद्धिस्त्वैहिकीष्यते ॥ २ ॥

## १३-स्वाम्यधिकरणम् सू०- ४४-४६

### सू०-स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥

पद०- स्वामिनः, फलश्रुतेः, इति, आत्रेयः ।

पदा०- स्वामिनः = यजमानस्यैव [साङ्गप्रधानोपासनेषु कर्तृत्वम्] इति आत्रेयः = आचार्य आत्रेयः [मन्यते, कुतः? ] फलश्रुतेः = उपासकस्यैव 'वर्षति हास्मै' इत्यादिफलश्रवणात् ।

### सू०-आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

पद०- आर्त्विज्यम्, इति, औडुलोमिः, तस्मै, हि, परिक्रीयते ।

पदा०- [अङ्गोपासनम् ] आर्त्विज्यम् = ऋत्विक्कर्तृकम् इति औडुलोमिः = औडुलोमिराचार्यः [मन्यते] हि = यतः, तस्मै = साङ्गाय कर्मणे, परिक्रीयते = ऋत्विक् परिक्रीतो भवति ।

## सू०- श्रुतेश्च ॥ ४६ ॥

पद०- श्रुतेः, च ।

पदा०- च = अपि च, श्रुतेः = यां वै काञ्चन.' (छा० १/१/८/९) इत्यादिश्रुतेः, [ऋत्विक्कर्तृकस्योपासनस्य यजमानगामिफलत्वश्रवणात् अङ्गकर्मणाम् ऋत्विगेव कर्ता ] ।

अधिकरणसार

अङ्गध्यानं याजमानमार्त्विजं वा यतः फलम् ।
ध्यातुरेव श्रुतं तस्माद्याजमानमुपासनम् ॥ १ ॥
ब्रूयादेवंविदुद्गातेत्यार्त्विजत्वं स्फुटं श्रुतम् ।
क्रीतत्वादृत्विजस्तेन कृतं स्वामिकृतं भवेत् ॥ २ ॥

## १४- सहकार्यन्तरविध्यधिकरणम् सू० ४७-४९

## सूत्र- सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

पद०- सहकार्यन्तरविधिः, पक्षेण, तृतीयम्, तद्वतः, विध्यादिवत् ।

पदा०- [फलभूतसाक्षात्कारे] सहकार्यन्तरविधिः = सहकार्यन्तरस्य निदिध्यासनाख्यस्य मौनस्यापूर्वत्वात् विधिः [आश्रयितव्यः, ननु 'मौनं वानप्रस्थम्' इत्यादौ पारिव्राज्ये मौनशब्दवृत्ति-

दर्शनात् कथमत्र मौनं निदिध्यासनमित्याह-] तृतीयम् = श्रवणाद्यपेक्षया तृतीयं निदिध्यासनम् [एव विवक्षितम्, स्मृतौ भिन्नाश्रमसमभिव्याहारात् निदिध्यासनप्रधानं पारिव्राज्यं मौनशब्देन लक्ष्यते इत्यविरोधः, ननु कस्य मौनविधिः ? इत्यत आह] तद्वतः = विद्यावतः 'विदित्वा' इति परोक्षज्ञानवतः संन्यासिनः प्रकृतत्वाद् [ननु सूक्ष्मवस्तुसाक्षात्कारे निदिध्यासनस्य लोकतः प्राप्तत्वात् विधिः निरर्थकः ? इत्यत आह-] पक्षेण = यस्मिन् पक्षे भेददर्शनप्राप्तिस्तेन पक्षेण [प्राप्त्यभावात् विधिरर्थवान् एव, ननु ब्रह्मपरवाक्ये कथं विधिः ? इत्याशङ्क्य दृष्टान्तमाह] विध्यादिवत् = विधेरादिर्विध्यादिः = प्रधानविधिः, तद्वत् = यथा दर्शपूर्णमासप्रधानपरे वाक्ये अन्वाधानादेरङ्गजातस्य विधिस्तद्वन्मौनस्येति भावः ।

## सू०- कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥

पद०- कृत्स्नभावात्, तु, गृहिणा, उपसंहारः ।

पदा०- [यज्ञादीनाम्, आश्रमान्तरविहितानां वा शमादीनाम्] कृत्स्न-

भावात् = गृहस्थाश्रम एव कात्स्न्र्येन विद्यमानत्वात्, गृहिणा = गृहस्थाश्रमेण, उपसंहारः = उपसंहरणम् [कृतम्, न तु 'संन्यासो नास्ति' इत्येतावता, संन्यासाश्रमप्रतिपादक–वाक्यानां भूयसां सत्त्वाद्, इति भावः] ।

**सू०- मौनवदितरेषामप्युपदेशात् ।। ४९ ।।**

पद०— मौनवत्, इतरेषाम् अपि उपदेशात् ।

पदा०- मौनवत् = मौनस्य गार्हस्थ्यस्य च यथा श्रुतिमत्त्वं तद्वत्, इतरेषामपि = ब्रह्मचारिवानप्रस्थाश्रमयोरपि, उपदेशात् = श्रुतिषु उपदेशात् [ताभ्यां सह चत्वार आश्रमा उक्ताः बहु–वचनन्तु व्यक्तिभेदाभिप्रायकम् ] ।

अधिकरणसार

अविधेयं विधेयं वा मौनं तत्र विधीयते ।
प्राप्तं पाण्डित्यतो मौनं ज्ञानवाच्युभयं यतः ।। १ ।।
निरन्तरज्ञाननिष्ठा मौनं पाण्डित्यतः पृथक् ।
विधेयं तद्भेददृष्टिप्राबल्ये तन्निवृत्तये ।। २ ।।

**१५- अनाविष्काराधिकरणम् सू०- ५०**

सू०— अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

पद०— अनाविष्कुर्वन्, अन्वयात् ।

पदा०-अनाविष्कुर्वन् = बालकवत् स्वस्य ज्ञानवैराग्यादिकं लोकानामप्रकटयन्[भावशुद्धो भवेत्' इत्येतावन्मात्रं 'अव्यक्तलिङ्गा अव्यक्तचाराः'(याज्ञ० ४) इत्यादिश्रुतेः विधीयते, कुतः ?] अन्वयात् = तावन्मात्रस्य प्रधाने ज्ञानाभ्यासेऽन्वयात् ।

अधिकरणसार

बाल्यं वयः कामचारो धीशुद्धिर्वा प्रसिद्धितः ।
वयस्तस्याविधेयत्वे कामचारोऽस्तु नेतरा ॥ १ ॥
मननस्योपयुक्तत्वाद् भावशुद्धिर्विवक्षिता ।
अत्यन्तानुपयोगित्वाद्विरुद्धत्वाच्च न द्वयम् ॥ २ ॥

१६ — ऐहिकाधिकरणम् सू०-५१

सूत्र-ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥५१ ॥

पद०— ऐहिकम्, अपि, अप्रस्तुतप्रतिबन्धे, तद्दर्शनात् ।

पदा०-अप्रस्तुतप्रतिबन्धे = प्रस्तुतेन = फलोन्मुखेन विद्याऽविरुद्धफलकेन कर्मणा प्रतिबन्धाभावे सति, ऐहिकमपि = साम्प्रतिकमपि

[विद्याजन्म भवत्येव, सति तु प्रतिबन्धे अमुत्रापि इत्यनियम एव, न तु इहैवेति नियमः, कुतः ?] तद् दर्शनात् = 'गर्भे एवैतच्छयानो वामदेव एवमुवाच' (ऐत० ४/५) इत्यादिश्रुतिषु तस्य अनियमस्य दर्शनात् ।

अधिकरणसार

इहैव नियतं ज्ञानं पाक्षिकं वा नियम्यते ।
तथाऽभिसंधेर्यज्ञादिः क्षीणो विविदिषाजनौ ॥ १ ॥
असति प्रतिबन्धेऽत्र ज्ञानं जन्मान्तरेऽन्यथा ।
श्रवणायेत्यादिशास्त्राद्वामदेवोद्भवादपि ॥ २ ॥

## १७– मुक्तिफलानियमाधिकरणम् सू०– ५२

## सूत्र– एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥

पद०– एवम्, मुक्तिफलानियमः, तदवस्थावधृतेः, तदवस्थावधृतेः ।

पदा०• एवम् = ब्रह्मसाक्षात्कारवत्, मुक्तिफलानियमः = मुक्तिफलस्य = मुक्तिरूपफलस्यापि, अनियमः = अस्मिन्नेव जन्मनि मोक्षोदय इति नियमो नास्त्येव, [कुतः ?] तदवस्थावधृतेः = तस्याः अवस्थायाः = मोक्षावस्थायः, अवधृतेः = 'ब्रह्मवेद ब्रह्मैव भवति

इत्यादिश्रुतिषु ब्रह्मसाक्षात्कारोत्तरकालीनत्वनिश्चयादित्यर्थः, [पदाभ्यासः अध्यायसमाप्त्यर्थः] ।

अधिकरणसार

मुक्तिः सातिशया नो वा फलत्वाद् ब्रह्मलोकवत् ।
स्वर्गवच्च नृभेदेन मुक्तिः सातिशयैव हि ॥ १ ॥

ब्रह्मैव मुक्तिर्न ब्रह्म क्वचित्सातिशयं श्रुतम् ।
अत एकविधा मुक्तिर्वेधसो मनुजस्य च ॥ २ ॥

॥ इति तृतीयाध्यायस्य चतुर्थपादः समाप्तः ॥

॥ समाप्तश्च तृतीयोऽध्यायः ॥

# ब्रह्मसूत्र- चतुर्थोऽध्यायः प्रथमःपादः

[अत्रास्मिन् फलाध्याये प्रथमपादे जीवन्मुक्तिनिरूपणम्]

## १ आवृत्त्यधिकरणम् सू० १-२

### सू०- आवृत्तिरसकृदुपदेशात् ॥ १ ॥

पद०- आवृत्तिः, असकृत्, उपदेशात् ।

पदा०- आवृत्तिः = षड्जादिस्वरसाक्षात्कारवद् दुर्विज्ञेयात्मसाक्षात्कारस्याऽऽवृत्तिविशिष्टश्रवणादिसाध्यतया तदावृत्तिः [कर्तव्या, कुतः? ] असकृदुपदेशात् = 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, (बृह० ४/५/६) इत्याद्यसकृदुपदेशात् । [एवं वेद' 'उपासीत' इत्यादिश्रवणादुपास्यसाक्षात्कारफलहेतुषु उपासनेषु आवृत्तिर्बोध्या] ।

### सू०- लिङ्गाच्च ॥ २ ॥

पद०- लिङ्गात्, च ।

पदा०- ['रश्मींस्त्वं पर्यावर्तयात्' (छा० १/५/२) इति रश्मिबहुत्वोपासनं विदधद् वाक्यं प्रत्ययावृत्तिं दर्शयति, अतः] लिङ्गात् = न्यायात् [साक्षात्कारसाधनेषु आवृत्तिः कर्त्तव्या ] ।

अधिकरणसार

श्रवणाद्याः सकृत्कार्या आवर्त्या वाऽसकृद्यतः ।
शास्त्रार्थस्तावता सिध्येत्प्रयाजादौ सकृत्कृतेः ॥ १ ॥
आवर्त्या दर्शनान्तास्ते तण्डुलान्त्यावघातवत् ।
दृष्टेऽत्र संभवत्यर्थे नादृष्टं कल्प्यते बुधैः ॥ २ ॥

## २- आत्मत्वोपासनाधिकरणम् सू०- ३

### सू०- आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

पद०- आत्मा, इति, तु, उपगच्छन्ति, ग्राहयन्ति, च ।

पदा०- आत्मेति = आत्मेत्येव [ब्रह्म ध्यातव्यम्] तु = यतः, उपगच्छन्ति = 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' (वराहो० २/३४) इत्यादिना आत्मत्वेन जाबालाः ब्रह्माऽभ्युपगच्छन्ति, च = तथा, ग्राहयन्ति = तत्त्वमसि' इत्यादिवाक्यानि ग्राहयन्ति । [न च तेषां 'मनोब्रह्म' (छा० ३/१८/१) इत्यादिवद् गौणार्थत्वम्, सति मुख्यार्थत्वे गौणार्थत्वायोगात् । न च प्रत्यक्षविरोधः, तस्य मिथ्यागोचरत्वेन पारमार्थिकाभेदागोचरत्वात्] ।

अधिकरणसार

ज्ञात्रा स्वान्यतया ब्रह्म ग्राह्यमात्मतयाऽथवा ।
अन्यत्वेन विजानीयाद् दुःख्यदुःखिविरोधतः ॥ १ ॥
औपाधिको विरोधोऽत आत्मत्वेनैव गृह्यताम् ।
गृह्णन्त्येवं महावाक्यै. स्वशिष्यान्ग्राहयन्ति च ॥ २ ॥

## ३– प्रतीकाधिकरणम् सू०- ४

## सू०- न प्रतीके नहि सः ॥ ४ ॥

पद०– न, प्रतीके, नहि, सः ।

पदा०- प्रतीके = प्रतीकोपासनासु, न = अहङ्ग्रहो न कर्तव्यः [कुतः ? विकल्पासहत्वात् । तथा हि-किं प्रतीके आत्मत्वानुभवबलादहंग्रहः, उत श्रुतत्वात्, उताहो स्वाभिन्नब्रह्माभिन्नत्वात् ? न तावदाद्यः, तथानुभवाभावात्] नहि, सः = उपासकः [आत्मत्वेन प्रतीकमनुभवति । न द्वितीयः, अश्रवणात् । नापि तृतीयः, प्रतीकस्य स्वरूपेण ब्रह्माभिन्नत्वायोगात् । अतः प्रतीकेऽहंग्रहो न कर्तव्यः, इति सिद्धम्] ।

अधिकरणसार

प्रतीकेऽहंदृष्टिरस्ति न वा ब्रह्माविभेदतः ।
जीवप्रतीकयोर्ब्रह्मद्वाराऽहंदृष्टिरिष्यते ॥ १ ॥
प्रतीकत्वोपासकत्वहानिर्ब्रह्मैक्यवीक्षणे ।
अवीक्षणे तु भिन्नत्वान्नास्त्यहंदृष्टियोग्यता ॥ २ ॥

## ४– ब्रह्मदृष्ट्यधिकरणम् सू०– ५

### सू०– ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

पद०– ब्रह्मदृष्टिः, उत्कर्षात् ।

पदा०–ब्रह्मदृष्टिः = प्रतीके एव ब्रह्मदृष्टिः कर्तव्या, [कुतः? ब्रह्मणः] उत्कर्षात् = उत्कृष्टत्वात् [उत्कृष्टदृष्टौ हि निकृष्टे क्रियमाणायां निकृष्टस्योत्कृष्टता भवति, राजदृष्ट्यामात्यस्येव] ।

अधिकरणसार

किमन्यधीर्ब्रह्मणि स्यादन्यस्मिन्ब्रह्मधीरुत ।
अन्यदृष्ट्योपासनीयं ब्रह्मात्र फलदत्वतः ॥ १ ॥
उत्कर्षेतिपरत्वाभ्यां ब्रह्मदृष्ट्याऽन्यचिन्तनम् ।
अन्योपास्त्या फलं दत्ते ब्रह्मातिथ्याद्युपास्तिवत् ॥ २ ॥

## ५—आदित्यादिमत्यधिकरणम् सू० ६

### सू०-आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

पद०- आदित्यादिमतयः, च, अङ्गे, उपपत्तेः ।

पदा०- अङ्गे = उद्गीथादिषु कर्माङ्गेषु, आदित्यादिमतयः = आदित्यादिबुद्धयः [एव कर्तव्याः, कुतः ?] उपपत्तेः = कर्मसमृद्धिरूपफलोपपत्तेः ।

अधिकरणसार

आदित्यादावङ्गदृष्टिरङ्गे रव्यादिधीरुत ।
नोत्कर्षो ब्रह्मजत्वेन द्वयोस्तेनैच्छिकी मतिः ॥ १ ॥
आदित्यादिधियाऽङ्गानां संस्कारे कर्मणः फले ।
युज्यतेऽतिशयस्तस्मादङ्गेष्वर्कादिदृष्टयः ॥ २ ॥

## ६- आसीनाधिकरणम् सू० ७-१०

### सू०- आसीनः सम्भवात् ॥ ७ ॥

पद०- आसीनः, सम्भवात् ।

पदा०- आसीनः = आसीन एव उपासनानि कुर्वीत, [कुतः ?] सम्भवात् = गमनादीनां चित्तविक्षेपकरतया आसीनस्यैव

उपासनानां सम्भवात् ।

सू०- ध्यानाच्च ॥ ८ ॥

पद०- ध्यानात्, च ।

पदा०- च = अपि च, ध्यानात् = उपासनानां ध्यायत्यर्थध्यानरूपत्वात् [ध्यानस्य चासीनेषु बकादिष्वेकविषयदृष्टिषु प्रसिद्धत्वादासीन एवोपासीत इत्यर्थः ।

सू०- अचलत्वं चापेक्ष्य ॥ ९ ॥

पद०- अचलत्वम्, च, अपेक्ष्य ।

पदा०- च = अपि च, अचलत्वम् = 'ध्यायतीव पृथिवी' (छा०७/६/१) इत्यत्र पृथिव्या अचलत्वम्, अपेक्ष्य = अपेक्षीकृत्य [ध्यानत्वोपचारो दृष्टः, अतोऽपि आसीनस्यैवोपासनेति गम्यते ] ।

सूत्र- स्मरन्ति च ॥ १० ॥

पद०- स्मरन्ति, च ।

पदा०- च = अपि च, स्मरन्ति = 'शुचौ देशे प्रतिष्ठाप्य' (गी०६/११) इत्यादिश्लोकेन गीतायां शिष्टा उपासनायै आसनं स्मरन्ति ।

अधिकरणसार

नास्त्यासनस्य नियम उपास्तावुत विद्यते ।
न देहस्थितिसापेक्षं मनोऽतो नियमो न हि ॥ १ ॥

शयनोत्थानगमनैर्विक्षेपस्यानिवारणात् ।
धीसमाधानहेतुत्वात्परिशिष्यत आसनम् ॥ २ ॥

## ७- एकाग्रताधिकरणम् सू० - ११

### सू०- यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

पद०- यत्र, एकाग्रता, तत्र, अविशेषात् ।

पदा०-यत्र = यस्मिन् देशे काले वा, एकाग्रता = चित्तस्यैकविषयप्रवाहः तत्र = तस्मिन् देशे [उपासीत, कुतः? ] अविशेषात् = दिगादि-देशविशेषस्य श्रवणाभावात् ।

अधिकरणसार

दिग्देशकालनियमो विद्यते वा न विद्यते ।
विद्यते वैदिकत्वेन कर्मस्वेतस्य दर्शनात् ॥ १ ॥

ऐकाग्र्यस्याविशेषेण दिगादिर्न नियम्यते ।
'मनोनुकूल' इत्युक्तेर्दृष्टार्थं देशभाषणम् ॥ २ ॥

## ८– आप्रायणाधिकरणम् सू० १२

### सू०–आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

पद०– आप्रायणात्, तत्र, अपि, हि, दृष्टम् ।

पदा०- आप्रायणात् = आमरणपर्यन्तम्, (उपासीत) हि = यतः, तत्रापि = मरणकालेऽपि, 'स यावत् क्रतुः, इत्यादिनोपास्य–प्रत्ययानुवर्तनम्, दृष्टम् = प्रतीतम्, [अतः अहंग्रहोपासनं मरणपर्य्यन्तं कार्यम् ] ।

अधिकरणसार

उपास्तीनां यावदिच्छमावृत्तिः स्यादुताऽऽमृति ।
उपास्त्यर्थाभिनिष्पत्तेर्यावदिच्छं न तूपरि ॥ १ ॥
अन्त्यप्रत्ययतो जन्म भाव्यतस्तत्प्रसिद्धये ।
आमृत्यावर्तनं न्याय्यं सदा तद्भाववाक्यतः ॥ २ ॥

## ९— तदधिगमाधिकरणम् सू०- १३

### सूत्र- तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

पद०– तदधिगमे, उत्तरपूर्वाघयोः, अश्लेषविनाशौ, तद्व्यपदेशात् ।

पदा०- तदधिगमे = तस्य ब्रह्मणः,अधिगमे = साक्षात्कारे सति,उत्तर-

पूर्वाघयोः = ज्ञानोत्तरं देहेन्द्रियादिवशात् सम्भावितं पापमुत्तराघम्, ज्ञानात्पूर्वं जन्मान्तरे इह जन्मनि वा संचितं पापं पूर्वाघम् तयोः, अश्लेषविनाशौ = ध्वंसासम्पर्कौ [ भवत एव, कुतः? ]तद्व्यपदेशात् = 'यथा पुष्करपलाश' (छा०४/१४/३) 'तद्यथेषीकातूलमग्नौ' इत्यादिश्रुतिभ्यां तयोः–पूर्वोत्तराघाश्लेषविनाशयोः व्यपदेशात् = कथनात् ।

अधिकरणसार

ज्ञानिनः पापलेपोऽस्ति नास्ति वाऽनुरभोगतः ।
अनाश इति शास्त्रेषु घोषाल्लेपोऽस्य विद्यते ॥ १ ॥
अकर्त्रात्मधिया बस्तुमहिम्नैव न लिप्यते ।
अश्लेषनाशावप्युक्तावज्ञे घोषस्तु सार्थक. ॥ २ ॥

## १०– इतरासंश्लेषाधिकरणम् सू०- १४

## सू०- इतरस्याप्येवमसंश्लेषः पाते तु ॥१४॥

पद०– इतरस्य, अपि, एवम्, असंश्लेषः, पाते, तु ।

पदा०- इतरस्यापि = पूर्वोत्तरस्य पुण्यस्यापि, एवम् = पूर्वोत्तराघवत्, असंश्लेषः = सश्लेषाभावो विनाशश्च भवतः, पाते तु = ब्रह्म–

विदः पुरुषधौरेयस्य पुण्यपापयोर्बन्धहेत्वोरभावाद् देहपाते तु [मुक्तिरवश्यंभाविनीत्यर्थः] ।

अधिकरणसार

पुण्येन लिप्यते नो वा लिप्यतेऽस्य श्रुतत्वतः ।
न हि श्रौतेन पुण्येन श्रौतं ज्ञानं विरुध्यते ॥ १ ॥
अलेपो वस्तुसामर्थ्यात्समानः पुण्यपापयोः ।
श्रुतं पुण्यं पापतया तरणं च समं श्रुतम् ॥ २ ॥

## ११—अनारब्धाधिकरणम् सू० १५

**सू०- अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥**

पद०— अनारब्धकार्ये, एव, तु, पूर्वे, तदवधेः ।

पदा०-अनारब्धकार्ये एव = ययोः फलं नारब्धं ते एव,पूर्वे = सञ्चिते पुण्यपापे [ज्ञानान्नश्यतः, कुतः ?] तदवधेः = 'तस्य तावदेव' (छा० ६/१४/२) इत्यादिश्रुत्या देहपातावधिश्रवणात् ।

अधिकरणसार

आरब्धे नश्यतो नो वा सञ्चिते इव नश्यतः ।
उभयत्राप्यकर्तृत्वतद्बोधौ सदृशौ खलु ॥ १ ॥

आदेहपातससारश्रुतेरनुभवादपि ।
इषुचक्रादिदृष्टान्तान्नैवाऽऽरब्धे विनश्यतः ॥ २ ॥

## १२- अग्निहोत्राद्यधिकरणम् सू० १६-१७

### सू०-अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥१६॥

पद०- अग्निहोत्रादि, तु, तत्कार्याय, एव, तद्दर्शनात् ।

पदा०- अग्निहोत्रादि तु = नित्यनैमित्तिकाग्निहोत्रादिकर्मजातम् तु, तत्कार्याय एव = तस्य ज्ञानस्य यत्कार्यं मोक्षरूपं तस्मै एव [कुतः ?] तद्दर्शनात् = यज्ञादिश्रुतौ तस्य ज्ञानहेतुत्वस्य दर्शनाद्, इति भावः ।

### सू०- अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥

पद०- अतः, अन्या, अपि, हि, एकेषाम्, उभयोः ।

पदा०- एकेषाम् = काण्वानां शाखायाम् अतः = अग्निहोत्रादेः, अन्यापि = पृथग्भूता स्वर्गादिसाधनीभूता क्रियापि, उभयोः = जैमिनिबादरायणयोः [सम्मता, साऽपि ब्रह्मज्ञानेन नश्यति- इति भावः ] ।

अधिकरणसार

नश्येन्नो वाऽग्निहोत्रादि नित्यं कर्म विनश्यति ।
यतोऽयं वस्तुमहिमा न क्वचित्प्रतिहन्यते ॥ १ ॥
अनुषक्तफलांशस्य नाशेऽप्यन्यो न नश्यति ।
विद्यायामुपयुक्तत्वाद् भाव्यश्लेषस्तु काम्यवत् ॥ २ ॥

## १३–विद्याज्ञानसाधनत्वाधिकरणम् सू० १८

## सू०- यदेव विद्ययेति हि ॥ १८ ॥

पद०– यद्, एव, विद्यया, इति, हि ।

पदा०- यत् = कर्म, विद्यया = अङ्गावबद्धोपासनया [सहकृतं तद्] एव = हि [कर्म अस्मिन् जन्मनि ब्रह्मज्ञानसाधनम्, कुतः ?] 'यदेव विद्यया' इति उपासनासहकृतस्यैव कर्मणः अविलम्बेन ज्ञानसाधनत्वप्रतिपादनात् ।

अधिकरणसार

किमङ्गोपास्ति संयुक्तमेव विद्योपयोग्ययुत ।
केवलं वा, प्रशस्तत्वात्सोपास्त्यैवोपयुज्यते ॥ १ ॥
केवलं वीर्यवद्विद्यासंयुक्तं वीर्यवत्तरम् ।
इति श्रुतेस्तारतम्यादुभयं ज्ञानसाधनम् ॥ २ ॥

## १४–इतरक्षपणाधिकरणम् सू०- १९

**सू०- भोगेन त्वितरे क्षपयित्वा सम्पद्यते ॥ १९ ॥**

पद०– भोगेन, तु, इतरे, क्षपयित्वा, सम्पद्यते ।

पदा०- इतरे तु = अन्ये तु आनारब्धे पुण्यपापे, भोगेन = भोगद्वारा, क्षपयित्वा = नाशयित्वा, सम्पद्यते = विद्वान् भवति ।

### अधिकरणसार

बहुजन्मप्रदारब्धयुक्तानां नास्त्युतास्ति मुक् ।
विद्यालोपे कृतं कर्म फलदं तेन नास्ति मुक् ॥ १ ॥
आरब्धं भोजयेदेव न तु विद्यां विलोपयेत् ।
सुप्तबुद्धवदश्लेषतादवस्थ्यात्कुतो न मुक् ॥ २ ॥

॥ चतुर्थोऽध्यायः प्रथमः पादः इति ॥

# चतुर्थाध्याये द्वितीयः पादः

[अत्र पादे उत्क्रान्ति-गति-निरूपणम्]

## १- वागधिकरणम् सू०- १-२

### सू०- वाङ् मनसि दर्शनाच्छब्दाच्च ।। १ ।।

पद०- वाक्, मनसि, दर्शनात्, शब्दात्' च ।

पदा०- वाक् = वाग्वृत्तिः, मनसि = अन्तःकरणे [लीयते, कुतः ?] दर्शनात् = मनोवृत्तौ सत्यामेव वाग्वृत्तेर्लयसंदर्शनात्, [ननु तर्हि वाक् शब्दस्य का गतिः ? तत्राह] शब्दाच्च = वाक्शब्दस्य वृत्तिवृत्तिमतोरभेदोपचारेण भावव्युत्पत्त्या वा वृत्तिपरत्वेन नयनादित्यर्थः ।

### सू०- अत एव च सर्वाण्यनु ।। २ ।।

पद०- अतः, एव, च, सर्वाणि, अनु ।

पदा०- अत एव = उक्तदर्शनादिहेतोरेव, सर्वाणि = चक्षुरादीनि इन्द्रियाणि, च = अपि च, [सवृत्तिके मनसि वृत्तिलयमात्रेण, अनुवर्तन्ते = लीयन्ते, न तु स्वरूपमात्रेणेत्यर्थः] ।

अधिकरणसार

वागादीनां स्वरूपेण वृत्त्या वा मानसे लयः ।
श्रुतिर्वाङ् मनसीत्याह स्वरूपविलयस्ततः ॥ १ ॥

न लीयतेऽनुपादाने कार्यं वृत्तिस्तु लीयते ।
वह्निवृत्तेर्जले शान्तेर्वाक् शब्दो वृत्तिलक्षकः ॥ २ ॥

## २- मनोऽधिकरणम् सू०- ३

## सू०- तन्मनः प्राण उत्तरात् ॥ ३ ॥

पद०- तत्, मनः, प्राणे, उत्तरात् ।

पदा०- तत् = सर्वेन्द्रियवृत्तिलयाधारभूतम्, मनः = अन्त करणम्, प्राणे = असौ (स्ववृत्तिलयद्वारा लीयते, न स्वरूपेण, कुतः ?) उत्तरात् = 'मनः प्राणे' इत्युत्तरवाक्यात् ।

अधिकरणसार

मनः प्राणे स्वयं वृत्त्या वा लीयेत स्वयं यतः ।
कारणान्नोदकद्वारा प्राणो हेतुर्मनः प्रति ॥ १ ॥

साक्षात्स्वहेतौ लीयेत कार्यं प्राणालिके न तु ।
गौणः प्राणालिको हेतुस्ततो वृत्तिलयो धियः ॥ २ ॥

## ३– अध्यक्षाधिकरणम् सू० ४-६

### सू०– सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

पद०– स, अध्यक्षे, तदुपगमादिभ्यः ।

पदा०– सः = प्राणः, अध्यक्षे = जीवे [निवृत्तवृत्तिः सन्नवतिष्ठते, कुतः ?] तदुपगमादिभ्यः = तं जीवं प्रति उपगमानुगमनावस्थानेभ्यो हेतुभ्यः ['एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' इत्युपगमः, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृ० ४/४/२) इत्यनुगमनम्, 'सविज्ञानो भवति' इत्यवस्थानम्, एतेभ्यो हेतुभ्यः ।

### सू०– भूतेषु तच्छ्रुतेः ॥ ५ ॥

पद०– भूतेषु, तच्छ्रुतेः, ।

पदा०– भूतेषु = तेजःप्रभृतिषु देहारम्भकेषु पञ्चमहाभूतेषु [उपहितत्वेन विद्यमाने जीवे प्राणस्य वृत्तिलयः, कुतः ?] तच्छ्रुतेः = 'प्राणस्तेजसि' इति तेजःप्रभृतिदेहारम्भकपञ्चमहाभूतोपहितत्वरूपेण वर्तमाने जीवे तस्य–सवृत्तिकस्य लयबोधिकायाः श्रुतेः ।

## सू०— नैकस्मिन्दर्शयतो हि ॥ ६ ॥

पद०— न, एकस्मिन्, दर्शयतः, हि ।

पदा०-उत्क्रान्तिकाले एकस्मिन् = तेजस्येकस्मिन्नेव, न = जीवो नावतिष्ठते, [अपितु देहस्य पाञ्चभौतिकत्वेन पञ्चसु भूतेषु तस्य अवस्थितिः] हि = यतः (अमुमर्थं श्रुतिस्मृती) दर्शयतः = प्रतिपादयतः, [अत एव तेजःपदं श्रुतिस्मृत्यनुरोधेन पञ्चमहाभूतोपलक्षणार्थमिति मन्तव्यम्] ।

अधिकरणसार

असोर्भूतेषु जीवे वा लयो भूतेषु तच्छ्रुतेः ।
स प्राणस्तेजसीत्याह न तु जीव इति क्वचित् ॥ १ ॥
एवमेवेममात्मानं प्राणा यन्तीति च श्रुतेः ।
जीवे लीत्वा सहैतेन पुनर्भूतेषु लीयते ॥ २ ॥

## ४—आसृत्युपक्रमाधिकरणम् सू० ७

## सू०-समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥७॥

पद०— समाना, च, आसृत्युपक्रमात्, अमृतत्वम्, च, अनुपोष्य ।

पदा०- आसृत्युपक्रमात् = देवयानमार्गोपक्रमात्, [प्राक् येयमुत्क्रान्तिः

सा विद्वदविदुषोः] समाना = तुल्या भवितुमर्हति, कुतः ? 'वाङ् मनसि' इत्याद्यविशेषश्रवणात् ।[ननु कथं तर्हि सगुणविद्यायाममृतत्वश्रवणम् इति,तत्राह]अमृतत्वं चानुपोष्य = अनुपोष्य–अदग्ध्वा[अविद्याक्लेशजालम्]अमृतत्वम्– मृतिराहित्यम् [आपेक्षिकमित्यर्थः] ।

अधिकरणसार

ज्ञान्यज्ञोत्क्रान्तिरसमा समा वा, नहि सा समा ।
मोक्षसंसाररूपस्य फलस्य विषमत्वतः ॥ १ ॥
आसृत्युपक्रमं जन्म वर्तमानमतः समा ।
पश्चात् फलवैषम्यादसमोत्क्रान्तिरेतयोः ॥ २ ॥

## ५– संसारव्यपदेशाधिकरणम्- सू० ८-११

## सू०– तदाऽऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

पद०– तद्, आपीतेः, संसारव्यपदेशात् ।

पदा०- तत् = यथोक्तम् तेजः, आपीते = आमोक्षाद् [अवतिष्ठते, कुतः ?] संसारव्यपदेशात् = 'योनिमन्ये' (क० ५/७) इत्यादिना संसारस्य कथनात् ।

**सू०- सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ।।९।।**

पद०– सूक्ष्मम्, प्रमाणतः, च, तथा, उपलब्धेः ।

पदा०- [यथोक्तं तेजः]प्रमाणतः स्वरूपतश्च, सूक्ष्मम् = अणुपरिमाणवत् (कुतः ?) तथोपलब्धेः = तस्य नाडीद्वारा निष्क्रमणश्रुत्या तथा सूक्ष्मत्वस्योपलब्धेरित्यर्थः ।

**सू०–नोपमर्देनातः ।। १० ।।**

पद०– न, उपमर्देन, अतः ।

पदा०- अतः = सूक्ष्मत्वादेव, उपमर्देन = स्थूलशरीरोपमर्देन, न = स्वयं नोपमृद्यते ।

**सू०- अस्यैव चोपपत्तेरेष ऊष्मा ।। ११ ।।**

पद०– अस्य, एव, च, उपपत्तेः, एष, ऊष्मा ।

पदा०- ऊष्मा = स्थूलशरीरे समुपलभ्यमानमौष्ण्यम्, अस्यैव = सूक्ष्मतेजस एव [धर्मः, कुतः?] उपपत्तेः = तस्मिन् सत्येव तदुपलब्धेः, तदभावे च तदनुपलब्धेः–इति अन्वयव्यतिरेकात्मकोपपत्तेरित्यर्थः ।

अधिकरणसार

स्वरूपेणाथ वृत्त्या वा भूतानां विलयः परे ।
स्वरूपेण लयो युक्तः स्वोपादाने परात्मनि ॥ १ ॥

आत्मज्ञस्य तथात्वेऽपि वृत्त्यैवान्यस्य तल्लयः ।
न चेत्कस्यापि जीवस्य न स्याज्जन्मान्तरं क्वचित् ॥ २ ॥

## ६– प्रतिषेधाधिकरणम् सू०- १२-१४

### सू०–प्रतिषेधादिति चेन्न शारीरात् ॥१२॥

पद०– प्रतिषेधात्, इति, चेत्, न, शारीरात् ।

पदा०- प्रतिषेधात् = 'न तस्य प्राणा उत्क्रामन्ति' (बृ० ४/४/६) इति श्रुत्या निर्गुणब्रह्मविदः शरीरादुत्क्रान्तिनिषेधात् [नास्ति तस्य उत्क्रान्तिः] इति चेन्न, शारीरात् = जीवात् [अयं निषेधः, न शरीरात्, अतः प्राणादियुतस्य जीवस्य ब्रह्मविदश्चाऽस्त्युत्क्रान्तिः–इति पूर्वपक्षः ] ।

### सूत्र- स्पष्टो ह्येकेषाम् ॥ १३ ॥

पद०– स्पष्टः, हि एकेषाम् ।

पदा०- एकेषाम् = काण्वानाम् [शाखायां प्राणानां परब्रह्मविदः देहा–

दुत्क्रान्तिनिषेधः] स्पष्टः = विस्पष्टः, हि = यतः [उपलभ्यते, अतः न तस्य उत्क्रान्तिः, अपितु अत्रैव लयः–इति भावः] ।

## सू०– स्मर्यते च ॥ १४ ॥

पद०–स्मर्यते, च ।

पदा०- च = अपि च, स्मर्यते = 'देवापि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः' इत्यनेन महाभारतवचनेन विदुष उत्क्रान्त्यभावः स्मर्यते, इत्यर्थः ।

अधिकरणसार

किं जीवादथवा देहात्प्राणोत्क्रान्तिर्निवार्यते ।
जीवान्निवारणं युक्तं जीवेद्देहोऽन्यथा सदा ॥ १ ॥
तप्ताश्मजलवद्देहे प्राणानां विलयः स्मृतः ।
उच्छ्वयत्येव देहोऽन्ते देहात्सा विनिवार्यते ॥ २ ॥

## ७– वागादिलयाधिकरणम् सू० १५

## सू०– तानि परे तथाह्याह ॥१५ ॥

पद०– तानि, परे, तथा, हि आह ।

पदा०- तानि = यथोक्तानि प्राणाख्यानीन्द्रियाणि, परे = परस्मिन्

ब्रह्मणि [लीयन्ते] हि = यतः, तथा = उक्तप्रकारेण, आह = 'एवमेवास्य' (प्रश्नो० ६/५) इत्यादिश्रुतिः प्रतिपादयति ।

अधिकरणसार

अस्य वागादयः स्वस्वहेतौ लीनाः परेऽथवा ।
गताः कला इति श्रुत्या स्वस्वहेतुषु तल्लयः ॥ १ ॥
नद्यब्धिलयसाम्योक्तेर्विद्वद्दृष्ट्या लयः परे ।
अन्यदृष्टिपरं शास्त्रं गता इत्याद्युदाहृतम् ॥ २ ॥

## ८-अविभागाधिकरणम् सू०-१६

## सूत्र- अविभागो वचनात् ॥ १६ ॥

पद०– अविभागः, वचनात् ।

पदा०- अविभागः = विद्वत्कलानां ब्रह्मणा सहात्यन्तमविभाग एव [कुतः] वचनात् = कलानां लयोक्त्यनन्तरं 'भिद्येते चासां नामरूपे', 'स एषोऽकलोऽमृतो भवति' (प्रश्नो० ६/५) इत्यादि-श्रुतिवाक्यादित्यर्थः ।

अधिकरणसार

तल्लयः शक्तिशेषेण निःशेषेणाथवाऽऽत्मनि ।
शक्तिशेषेण युक्तोऽसावज्ञानिष्वेतदीक्षणाद् ॥ १ ॥

नामरूपविभेदोक्तेर्नि.शेषेणैव तल्लयः ।
अज्ञे जन्मान्तरार्थं तु शक्तिशेषत्वमिष्यते ॥ २ ॥

## ९- तदोकोऽधिकरणम्- सू० १७

**सू०- तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥**

पद०–तदोकोग्रज्वलनम, तत्प्रकाशितद्वारः, विद्यासामर्थ्यात्, तच्छेष-गत्यनुस्मृतियोगात्, च, हार्दानुगृहीत., शताधिकया ।

पदा०-तदोकोग्रज्वलनम् = तस्य–लीनवृत्तिकवागादिसमुदायस्योत्क्रमिष्यतो जीवस्य,ओक.–आधारभूतहृदयम्, तस्य यदग्रम्—ऊर्ध्व-भागः, तस्य ज्वलनम्–प्राप्तव्यज्ञानरूपं प्रद्योतनाख्यम्, आदौ भवति, तत्प्रकाशितद्वारः = तेन द्योतनेन प्रकाशितद्वारः- प्रदर्शितदेवयानमार्गः [ विद्वान् अविद्वांश्च भवति, तत्राविद्वान् स्थानान्तरेभ्यो निष्क्रामति, विद्वांस्तु मूर्धस्थानादेव, कुतः ?] विद्यासामर्थ्यात् = ज्ञानबलात् [यदि नाम सविद्योऽपि विद्वारहितवदितरस्थानेभ्यो विनिष्क्रामेत, नैवोत्कृष्टफलं लभेत । ननु

स्थानान्तरेभ्योऽपि उत्क्रामन्नुत्कृष्टं फलं प्राप्नुयादिति चेन्नेत्याह] तच्छेषगत्यनुस्मृतियोगाच्च = तस्याः सगुणविद्यायाः शेषभूता या गतिः मूर्धन्यनाडीसृतिः तस्या अनुस्मृतिर्ध्यानं, तद्योगात्–तद्विधानाच्च [यदि स्थानान्तरेभ्यो निष्क्रामतोऽपि विशिष्टफलप्राप्तिः स्यात्, तर्हि विशिष्टगतिचिन्तनविधानं व्यर्थमेव स्यात्, अतः दीर्घकालनैरन्तर्यसत्कारैर्दृढमासेवितेन] हार्देन ब्रह्मणा अनुगृहीतः = तद्भावमापन्नो विद्वान् शताधिकया = शतादप्यधिकया नाड्या मूर्धन्ययैव निष्क्रामति, इत्यर्थः ।

अधिकरणसार

अविशेषो विशेषो वा स्यादुत्क्रान्तेरुपासितुः ।
हृत्प्रद्योतनसाम्योक्तेरविशेषोऽन्यनिर्गमात् ॥ १ ॥
मुर्धन्ययैव नाड्याऽसौ व्रजेन्नाडीविचिन्तनात् ।
विद्यासामर्थ्यतश्चापि विशेषोऽस्त्यन्यनिर्गमात् ॥ २ ॥

## १०- रश्म्यधिकरणम्- सू० १८–१९

### सूत्र- रश्म्यनुसारी ॥ १८ ॥

पदा०- [सुषुम्नानाड्या देहाद् बहिर्गत उपासक] रश्म्यनुसारी = नाडीसंसृष्टसूर्यकिरणावलम्बी [सन् किरणद्वारेण ब्रह्मलोकं गच्छति] इत्यर्थः ।

## सू०—निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥

पद०- निशि, न, इति, चेत्, न, सम्बन्धस्य, यावद्देहभावित्वात्, दर्शयति, च ।

पदा०- [अहनि सूर्यरश्मिनाडीसम्बन्धस्य वर्तमानत्वात तत्रैव अहन्येव मृतो भवतु रश्म्यनुसारी परन्तु] निशि = रात्रौ मृतः तथा न —न भवति रश्म्यनुसारी,इति चेन्न = यदि कश्चित्तथा शङ्केत, तदा तन्न वरम्,कुतः? सम्बन्धस्य = रश्मिनाडीसम्बन्धस्य,यावद्देहभावित्वात् = रात्रौ दिवा च वर्तमानत्वात्, दर्शयति च = श्रुतिः प्रतिपादयति तदर्थम् 'अमुष्मादादित्यात्' (छा०८/६/५) इत्यादिना ।

### अधिकरणसार

अहन्येव मृतो रश्मीन्याति निश्यपि वा निशि ।<br>
सूर्यरश्मेरभावेन मृतोऽहन्येव याति तम् ॥ १ ॥

यावद्देहं रश्मिनाड्योर्योगो ग्रीष्मक्षपास्वपि ।
देहदाहाच्छ्रुतत्वाच्च रश्मीन्निश्यपि यात्यसौ ॥ २ ॥

## ११-दक्षिणायनाधिकरणम् सू० २०-२१

### सू०- अतश्चायनेऽपि दक्षिणे ॥ २० ॥

पद०- अतः च, अयने, अपि, दक्षिणे ।

पदा०-अतश्च = अत एव कालान्तरप्रतीक्षानुपपत्तेः विद्यायाः नित्यवत्फलसम्बन्धश्रवणाच्च दक्षिणेऽपि अयने = सूर्ये दक्षिणवर्तिन्यपि [मृतः विद्वान् फलं प्राप्नोत्येवेत्यर्थः, प्राशस्त्यप्रसिद्धिरविद्वद्विषया, भीष्मस्य च प्रतीक्षापरिपालनमाचारपरिपालनार्थं, पितृप्रसादलब्धस्वेच्छामरणज्ञापनार्थं वेति द्रष्टव्यम्] ।

### सू०- योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥२१॥

पद०- योगिनः, प्रति, च, स्मर्यते, स्मार्ते, च, एते ।

पदा०- योगिनः प्रति = स्मार्तविद्योपासकान् प्रति [अयमहरादिकालविशेष.] स्मर्यते = कथ्यते, [स्मार्तत्वप्रत्यासत्तेः न श्रौतदहराद्युपासकाः योगिन एव स्मृत्युक्ताः किं न स्युरित्यत आह] स्मार्ते चैते = एते सांख्ययोगे स्मार्ते एव न श्रौते, तस्मात्

श्रुतिस्मृत्योरर्थभेदान्न श्रौतोपास्तिषु कालनियमः, अतो विद्वान् यदा कदापि मृतो विद्याफलमाप्नोति, इति भावः ।]

अधिकरणसार

अयने दक्षिणे मृत्वा धीफलं नैत्ययैति वा ।
नैत्युत्तरायणाद्युक्तेर्भीष्मस्यापि प्रतीक्षणात् ॥ १ ॥
आतिवाहिकदेवोक्तेर्वरख्यात्यौ प्रतीक्षणात् ।
फलैकान्त्याच्च विद्यायाः फलं प्राप्नोत्युपासकः ॥ २ ॥

॥ चतुर्थोऽध्यायः द्वितीयः पादः इति ॥

# (चतुर्थाऽध्याये तृतीयः पादः)

(अत्र पादे सगुणविद्यावतो मृतस्योत्तरमार्गाभिधानम्)

## १–अर्चिराद्यधिकरणम् सू० १

### सूत्र- अर्चिरादिना तत्प्रथितेः ।। १ ।।

पद०– अर्चिरादिना, तत्प्रथितेः ।

पदा०- अर्चिरादिना = अर्चिरादिनैकेन मार्गेणैव [सर्वोऽपि ब्रह्मलोक-प्रेप्सुः गन्तुमर्हति, कुतः ?] तत्प्रथितेः = तस्य उक्तार्चिरादि-मार्गस्य पञ्चाग्निविद्याप्रकरणे,'ये चेमेऽरण्ये' (बृह० ६/२/१५) इति पञ्चाग्न्युपासकस्येवेतरस्यापि सगुणब्रह्मोपासकस्य प्रथितेः—श्रुतत्वात् ।

#### अधिकरणसार

नानाविधो ब्रह्मलोकमार्गो यद्वाऽर्चिरादिकः ।
नानाविधः स्याद्विद्यासु वर्णनादन्यथाऽन्यथा ।। १ ।।
एक एवार्चिरादिः स्यान्नानाश्रुत्युक्तपूर्वकः ।
यतः पञ्चाग्निविद्यायां विद्यान्तरवतां श्रुतः ।। २ ।।

## २- वाय्वधिकरणम्- सू० २

### सू०-वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

पद०--वायुम्, अब्दात्, अविशेषविशेषाभ्याम् ।

पदा०- अब्दात् = संवत्सरात् [अनन्तरमादित्यादर्वागेव] वायुम् = वायुलोकं [अभिसंविशन्ति, कुतः ?] अविशेषविशेषाभ्याम् = कौषीतकिश्रुतौ वायोः कुतश्चिदानन्तर्यमर्वाक्त्वं वा विशेषो न ज्ञायते, तद्वाचकपदाभावात्, तथा बृहदारण्यके 'यदा वै पुरुषोऽस्माल्लोकात् (बृह० ४/१०/१) इत्यत्र आदित्यादर्वाक्-त्वम् विशेषः, आभ्यां हेतुभ्यामित्यर्थः ।

अधिकरणसार

संनिवेशयितुं वायुरत्राशक्योऽथ शक्यते ।
न शक्यो वायुलोकस्य श्रुतक्रमविवर्जनात् ॥ १ ॥

वायुच्छिद्राद्विनिष्क्रम्य स आदित्यं व्रजेदिति ।
श्रुतेरर्वाग्रवेर्वायुर्देवलोकस्ततोऽप्यधः ॥ २ ॥

## ३- तडिदधिकरणम् सू० ३

### सू०- तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

पद०- तडितः, अधि, वरुणः, सम्बन्धात् ।

पदा०- तडितः = विद्युल्लोकात्, अधि = उपरिष्टात्, वरुणः = वरुण-लोकः [सम्बध्यते, कुतः ? ] सम्बन्धात् = वरुणस्याब्द्द्वारा विद्युत्सम्ब धात् ।

अधिकरणसार

वरुणादेः सनिवेशो नास्ति तत्राथ विद्यते ।
नास्ति वायोरिवैतस्य व्यवस्थाश्रुत्यभावतः ॥ १ ॥

विद्युत्संबन्धिवृष्टिस्थनीरस्याधिपतित्वतः ।
वरुणो विद्युतोऽस्त्यूर्ध्वं तत इन्द्रप्रजापती ॥ २ ॥

## ४–आतिवाहिकाधिकरणम् सू० ४-६

## सू०- आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥

पद०- आतिवाहिकाः, तल्लिङ्गात् ।

पदा०- आतिवाहिकाः = अर्चिरादयः कार्यब्रह्मगन्तॄणां गमयितारः, कुतः ? तल्लिङ्गात्— 'अमानव स एनान् ब्रह्म गमयति (छा० ४/१५/५) इत्यमानवपुरुषस्य विद्युल्लोकप्राप्तान् उपा-सकान् प्रति गमयितृत्वश्रवणात् ।

सू०- उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥

पद०– उभयव्यामोहात्, तत्सिद्धेः ।

पदा०-उभयव्यामोहत् = उभयोः मार्गगन्त्रोः, व्यामोहात् = अज्ञत्वात, (ऊर्ध्वगतिर्न स्यात्, अतः 'स्वयं प्रयत्नशून्यश्चेतनान्तरेण नेयः, इति न्यायानुगृहीताल्लिङ्गात्) तत्सिद्धेः = नेतृत्वसिद्धेः ।

सू०-वैद्युतेनैव ततस्तच्छ्रुतेः ॥६॥

पद०– वैद्युतेन, एव, ततः, तच्छ्रुतेः ।

पदा०- वैद्युतेनैव = विद्युल्लोकमागतेनाऽमानवपुरुषेण एव, ततः = विद्युत् प्राप्तेः (ऊर्ध्वं नीयमाना उपासकाः कार्यब्रह्म प्राप्नुवन्ति, कुतः ?) तच्छ्रुतेः = 'अमानवः स एत्य ब्रह्मलोकं गमयति' (छा० ४/१५/५) इति श्रुतेः ।

अधिकरणसार

मार्गचिह्नं भोगभूर्वा नेतारो वाऽर्चिरादयः ।
आद्यौ स्यातां मार्गचिह्नसारूप्याल्लोकशब्दतः ॥ १ ॥
अन्त्ये गमयतीत्युक्तेर्नेतारस्तेषु चेदृशः ।
निर्देशोऽस्त्यत्र लोकाख्या तन्निवासिजनान्प्रति ॥ २ ॥

## ५—कार्याधिकरणम् सू० ७-१४

### सूत्र- कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥

पद०- कार्यम्, बादरिः, अस्य, गत्युपपत्तेः ।

पदा०- कार्यम् = कार्यमेव ब्रह्म ['स एनान् ब्रह्म गमयति' (छा० ४/१५/५) इत्यत्र गन्तव्यतयोक्तम्, न परं निर्गुणं ब्रह्म, कस्माद्धेतोः ? ] अस्य = परिच्छिन्नस्य कार्यब्रह्मणः गत्युपपत्तेः = गन्तव्यत्वोपपत्तेः [नहि व्यापकस्य गत्यादिक्रियाशून्यस्य गत्यादिकं भवितुमर्हति, अतो नोक्तश्रुत्या परब्रह्मणो गन्तव्यतयोक्तिरपितु कार्यब्रह्मण एवेति भावः] ।

### सू०- विशेषितत्वाच्च ॥ ८ ॥

पद०- विशेषितत्वात्, च ।

पदा०- च = अपि च, ['ब्रह्मलोकान् गमयति' (बृ० ६/२/१५) इत्यत्र श्रुतौ] विशेषितत्वात् = बहुवचनेन गन्तव्यब्रह्मणो विशेषितत्वात् [न परस्य गन्तव्यतयोक्तिरिति भावः] ।

### सू०- सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥

पद०- सामीप्यात्, तु, तद्व्यपदेशः ।

पदा०- सामीप्यात् = कार्यब्रह्मणः कारणब्रह्मसान्निध्यात्, तु = एव, तद्‌व्यपदेशः = तस्य कारणे मुख्यस्य ब्रह्मशब्दस्य कार्यब्रह्मणि व्यपदेशः–लक्षणया प्रयोगः ।

**सूत्र- कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥**

पद०- कार्यात्यये, तदध्यक्षेण, सह, अतः, परम्, अभिधानात् ।

पदा०-कार्यात्यये = कार्यस्य–कार्यब्रह्मलोकस्य अत्यये–नाशे सति, तदध्यक्षेण = तल्लोकस्वामिना हिरण्यगर्भेण सह, अतः = कार्याद् ब्रह्मणः, पर ब्रह्म प्राप्नुवन्ति, कुतः ? अभिधानात् = 'उत्पन्नात्मसाक्षात्कारा विद्वांसः' इत्यनावृत्तिश्रुत्यभिधानात् ।

**सू०- स्मृतेश्च ॥ ११ ॥**

पद०- स्मृतेः, च ।

पदा०-च = अपि, स्मृतेः = 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' ॥ इति स्मृतेः कार्यब्रह्मलोकं प्राप्ताः क्रमेण मुक्तिं प्राप्नुवन्ति इति अवगन्तव्यम् ।

**सू०- परं जैमिनिर्मुख्यत्वात् ॥१२॥**

पद०— परम्, जैमिनिः, मुख्यत्वात् ।

पदा०- जैमिनिः = जैमिनिराचार्यः परम् = परमेव ब्रह्म [गन्तव्यतया आह, कुतः ?] मुख्यत्वात् = तत्रैव परब्रह्मणि ब्रह्मशब्दस्य मुख्यत्वात् ।

## सू०— दर्शनाच्च ॥ १३ ॥

पद०— दर्शनात्, च ।

पदा०- च = अपि च, दर्शनात् = 'तयोर्ध्वमायन्नमृतत्वमेति' (छा० ८/६/६ क० ६/१६) इत्यादिश्रुत्या [मुक्तेर्गतिपूर्वकत्वश्रवणादपि परमेव ब्रह्म गमयति इति निश्चितं भवति ] ।

## सू०- न च कार्ये प्रतिपत्त्यभिसन्धिः ॥१४॥

पद०— न, च, कार्ये, प्रतिपत्त्यभिसन्धिः ।

पदा०-च = अपि च,प्रतिपत्त्यभिसन्धिः = 'प्रजापतेः सभां वेश्म प्रपद्ये' (छा० ८/१४/१) इत्ययं वेश्मप्राप्तिसङ्कल्पः, न कार्ये = कार्यब्रह्मविषयको न भवति, अपि तु परब्रह्मविषयक एव, 'ते यदन्तरा' (छा०८/१४/१) इत्यादिना परस्यैव प्रकृतत्वात्— इति चेन्न,'प्रजापतेः सभां वेश्म प्रपद्ये' इति वाक्यश्रुतिभ्यां

दुर्बलप्रकरणविच्छेदेन वेश्मप्राप्तिसङ्कल्पस्य कार्यब्रह्मविषयकत्वावगमात्, अतः कार्यब्रह्मैव गन्तव्यम् ।

अधिकरणसार

परं ब्रह्माथवा कार्यमुदङ्मार्गेण गम्यते ।
मुख्यत्वादमृतत्वोक्तेर्गम्यते परमेव तत् ॥ १ ॥

कार्यं स्याद् गतियोग्यत्वात्परस्मिंस्तदसम्भवात् ।
सामीप्याद् ब्रह्मशब्दोक्तिरमृतत्वं क्रमाद् भवेत् ॥ २ ॥

## ६–अप्रतीकालम्बनाधिकरणम् सू० १५-१६

**सू०-अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥**

पद०– अप्रतीकालम्बनाम्, नयति, इति, बादरायणः, उभयथा, अदोषात्, तत्क्रतुः, च ।

पदा०- अप्रतीकालम्बनान् = प्रतीकोपासकभिन्नानुपासकान्, नयति = प्रापयति [ब्रह्मलोकममानव. पुरुषः, न सर्वान्] इति बादरायणः = आचार्यो बादरायणः [ मन्यते, ननु तर्हि 'अनियमः सर्वासाम्' (ब्र० सू० ३/३/३१) इति सर्वोपासनेषु कृतो मार्गो-

पसंहार पीड्येतेति चेन्न] उभयथा अदोषात् = कांश्चिदुपास-कान् नयति कांश्चिन्न नयतीत्युभयथाऽभ्युपगमेऽपि अदोषात्—दोषाभावात्[तथा चोक्तानियमशास्त्र प्रतीकभिन्नविषयकमिति न दोषः, तत्र नियामकं ब्रूते] तत्क्रतुश्च = तस्य—कार्यब्रह्मणः क्रतुः—उपासनं यस्य स तत्क्रतुः—उपासकः, [एवञ्च यो यद्वि-षयकोपासकः स तत्प्राप्नोतीति श्रुतिस्मृतिसिद्धत्वात् तदु-पासकानामेव कार्यब्रह्मप्राप्तिः, प्रतीकोपासनेषु प्रतीकस्यैव प्राधान्यात्, न तदुपासकानां ब्रह्मप्राप्तिरिति विवेकः] ।

**सू०- विशेषं च दर्शयति ॥ १६ ॥**

पद०- विशेषम्, च, दर्शयति ।

पदा०- च = अपि च, विशेषम् = 'यावन्नाम्नो गतं तत्राऽस्य' (छा० ७/१/५) इत्यादिना नामप्रतीकोपासनफलादुत्तरोत्तरवागाद्यु-पासनानामुत्कृष्टफलविशेषं दर्शयति = 'वाग् वाव नाम्नो भूयसी' (छा०७/२/२) इत्याद्या श्रुतिः प्रतिपादयति, अयञ्च फलविशेषः प्रतीकानामुपास्यत्वे युज्यते, नैकरूपस्य ब्रह्मण

उपास्यत्वे । तस्माद् ब्रह्मोपासकानामेव ब्रह्मप्राप्तिर्न प्रतीकोपासकानामिति भावः ।

अधिकरणसार

प्रतीकोपासकान्ब्रह्मलोकं नयति वा न वा ।
अविशेषश्रुतेरेतान्ब्रह्मोपासकवन्नयेत् ॥ १ ॥
ब्रह्मक्रतोरभावेन प्रतीकार्हफलश्रवात् ।
न तान्नयति पञ्चाग्निविदो नयति तच्छ्रुतेः ॥ २ ॥

॥ चतुर्थोऽध्यायः तृतीयः पादः इति ॥

# ।। चतुर्थाऽध्याये चतुर्थः पादः ।।

[अत्र पादे ब्रह्मप्राप्ति–ब्रह्मलोकस्थितिनिरूपणम्]

## १—सम्पद्याविर्भावाधिकरणम् सू० १–३

### सू०- संपद्याविर्भावः स्वेन शब्दात् ।। १ ।।

पद०– सम्पद्य, आविर्भावः, स्वेन, शब्दात् ।

पदा०- सम्पद्य = स्वप्रकाशस्वरूपमात्मानं साक्षादनुभूय [तेनैवाऽऽत्म-रूपेण] आविर्भावः = विद्वान् आविर्भवति, [कुतः ?] स्वेन शब्दात् = 'स्वेन रूपेण' (छा० ८/९/३) इत्यादौ स्वपदस्य प्रक्षेपात् ।

### सू० मुक्तः प्रतिज्ञानात् ।। २ ।।

पद०– मुक्तः, प्रतिज्ञानात् ।

पदा०- मुक्तः = मुक्तिं प्राप्तः [पुरुषः पूर्णानन्दात्मना अवतिष्ठते, कुतः ?] प्रतिज्ञानात् = 'एतं त्वेव ते' (छा० ८/९/३) इत्यादिना सकलानर्थविनिर्मुक्तस्यैवानन्दात्मनो व्याख्येयत्वेन प्रतिज्ञानात् इत्यर्थः ।

### सू०- आत्मा प्रकरणात् ।। ३ ।।

पद०- आत्मा, प्रकरणात् ।

पदा०- आत्मा = चेतनः [एव प्रकृते ज्योतिःशब्देन ग्राह्यः, कुत ?] प्रकरणात् = 'य आत्मा अपहतपाप्मा' (छा० ८/७/१) इत्यात्मनः प्रकरणात् ।

### अधिकरणसार

नाकवन्नूतनं मुक्तिरूपं यद्वा पुरातनम् ।
अभिनिष्पत्तिवचनात्फलत्वादपि नूतनम् ॥ १ ॥

स्वेन रूपेणेति वाक्ये स्वशब्दात्तत्पुरातनम् ।
आविर्भावोऽभिनिष्पत्तिः फलं चाज्ञानहानितः ॥ २ ॥

## २- अविभागेन दृष्टत्वाधिकरणम्- सू० ४

### सू०—अविभागेन दृष्टत्वात् ॥ ४ ॥

पद०- अविभागेन, दृष्टत्वात् ।

पदा०- अविभागेन = निरतिशयानन्दब्रह्मात्मना [ मुक्तिः अवतिष्ठते, कुतः? ] दृष्टत्वात् = 'ब्रह्मैव सन् ब्रह्माप्येति' (बृह०४/४/६) 'तत्त्वमसि' (छा० ६/८/७) इत्यादिश्रुतिषु अभेदस्यैव दृष्टत्वात् ।

अधिकरणसार

मुक्तरूपाद् ब्रह्म भिन्नमभिन्नं वा विभिद्यते ।
संपद्य ज्योतिरित्येवं कर्मकर्तृभिदोक्तितः ॥ १ ॥

अभिनिष्पन्नरूपस्य स उत्तमपुमानिति ।
ब्रह्मत्वोक्तेरभिन्नं तद् भेदोक्तिरुपचारतः ॥ २ ॥

## ३- ब्राह्माधिकरणम् सू०- ५-७

### सू० ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥

पद०- ब्राह्मेण, जैमिनिः, उपन्यासादिभ्यः ।

पदा०- ब्राह्मेण = सत्येन सर्वज्ञत्वादिना (युक्तो मुक्तः पुरुषः अवतिष्ठते, इति) जैमिनिः = आचार्यो जैमिनिः [मन्यते, कुतः?] उपन्यासादिभ्यः = 'सोऽन्वेष्टव्यः' इति विधानार्थमागतः, 'य आत्मा' (छा० ८/७/१) इत्यादिरुद्देशः-उपन्यासः, 'तस्य सर्वेषु लोकेषु कामचारो भवति' (छा० ७/२५/२) इत्यादिरज्ञातज्ञापको विधिः, 'यः सर्वज्ञः' इत्यादिर्व्यपदेशः, अमीभ्यो हेतुभ्यः ।

### सू०-चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥६॥

पद०— चितितन्मात्रेण, तदात्मकत्वात्, इति, औडुलोमिः ।

पदा०— तदात्मकत्वात् = जीवात्मनां चैतन्यात्मकत्वात्, चितितन्मात्रेण = चैतन्यात्मना, [अवस्थिते मुक्ते ब्रह्मणि सर्वज्ञत्वादिश-दा व्यर्था एव प्रयुज्यन्ते] इति औडुलोमिः = आचार्य औडुलोमिः [मन्यते] ।

**सू०— एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

पद०— एवम्, अपि, उपन्यासात्, पूर्वभावात्, अविरोधम् बादरायणः ।

पदा०— एवमपि = पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि, उपन्यासात् = पूर्वोक्तोपन्यासादिभ्यः, पूर्वभावात् = पूर्वस्य ब्रह्मस्वरूपस्य सर्वज्ञत्वादेर्व्यावहारिकस्य भावात् [ब्रह्मणो मुक्तात्मनः सप्रपञ्चत्वनिष्प्रपञ्चत्वयोः] अविरोधम् = विरोधाभावम्, बादरायणः = बादरायणाचार्यः [मन्यते] ।

अधिकरणसार

क्रमेण युगपद्वाऽस्य सविशेषाविशेषते ।
विरुद्धत्वात्कालभेदाद् व्यवस्था श्रुतयोस्तयोः ॥ १ ॥

मुक्तामुक्तदृशोर्भेदाद् व्यवस्था संभवे सति ।
अविरुद्धं यौगपद्यमश्रुतं क्रमकल्पनम् ॥ २ ॥

## ४- सङ्कल्पाधिकरणम् सू० ८-९

### सू०—संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

पद०— संकल्पात्, एव, तु, तच्छ्रुतेः ।

पदा०- संकल्पादेव = केवलात् संकल्पादेव [अस्य विदुषः पित्रादि-लोकप्राप्तिः, कुतः ?] तच्छ्रुतेः = 'संकल्पादेवास्य पितरः' (छा० ८/२/१) इत्यादियत्नान्तरनिरपेक्षसत्यसंकल्पश्रुतेः ।

### सूत्र- अत एव चाऽनन्याधिपतिः ॥ ९ ॥

पद०— अतः, एव, च, अनन्याधिपतिः ।

पदा०-अत एव च = सत्यसंकल्पादेव च, अनन्याधिपतिः = विदुषोऽन्या-धिपतिर्न भवति इत्यर्थः । यदि विदुषोऽन्याधिपतिः स्यात्, तर्हि तदधीनभोगस्य संकल्पमात्रसाध्यत्वाभावात् सत्यसंकल्प-त्वं न स्यात्, अतो विदुषः संकल्पादेव सर्वैश्वर्यप्राप्तिः ।

अधिकरणसार

भोग्यसृष्टावस्ति बाह्यो हेतुः संकल्प एव वा ।
आशामोदकवैषम्याद्धेतुर्बाह्योऽस्ति लोकवत् ॥ १ ॥

संकल्पादेव पितर इति श्रुत्याऽवधारणात् ।
संकल्प एव हेतुः स्याद्वैषम्यं चानुचिन्तनात् ॥ २ ॥

## ५-अभावाधिकरणम् सू० १०-१४

### सू०- अभावं बादरिराह ह्येवम् ॥ १० ॥

पद०- अभावम्, बादरिः, आह, हि, एवम् ।

पदा०-अभावम् = विदुषः शरीरेन्द्रियाभावम्,बादरिः = बादरिराचार्यः मन्यते, हि = यतः, एवम् = विदुषः शरीराद्यभावम्, आह = 'मनसैतान् कामान् पश्यन्' (छा० ८/१२/५) इत्यादिश्रुतिः कथयति ।

### सू०-भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

पद०- भावम्, जैमिनिः, विकल्पामननात् ।

पदा०- भावम् = मनस इव शरीरेन्द्रियाणां सत्त्वम्, जैमिनिः = आचार्यो जैमिनिः [मन्यते, कुतः ?] विकल्पामननात् = 'स एकधा भवति त्रिधा भवति' (छा० ७/२६/२) इत्यादिना विदुषोऽनेकधाभावविकल्पामननात् ।

### सू०-द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

पद०– द्वादशाहवत्, उभयविधम्, बादरायणः, अतः ।

पदा०- अतः = मनसेति विशेषणात् अनेकधाभावविकल्पाच्च, लिङ्गद्वयात्, उभयविधम् = यदा शरीरादिसंकल्पस्तदा सशरीरत्वम्, यदा सत्यसङ्कल्पाभावस्तदा शरीरेन्द्रियवत्त्वाभावः [इत्युभयप्रकारकं विदुष ऐश्वर्यम्] बादरायणः = आचार्यो बादरायणो मन्यते, कथमिवेति दृष्टान्ताकाङ्क्षायाम् दृष्टान्तमाह– द्वादशाहवत् = यथा'द्वादशाहमृद्धिकामा उपेयुः इत्युपायिचोदना गम्यत्वात् द्वादशाहस्य सत्रत्वं 'द्वादशाहेन प्रजाकामं याजयेत्' इत्यहर्गणत्वे सति यजति चोदनागम्यत्वात् अहीनत्वञ्चेत्युभयविधत्वं तद्वत् इति ।

## सू०– तन्वभावे सन्ध्यवदुपपत्तेः ॥१३॥

पद०– तन्वभावे, सन्ध्यवत्, उपपत्तेः ।

पदा०- तन्वभावे = तनोः– सेन्द्रियस्य शरीरस्त अभावे–विरहे; सन्ध्यवत् = यथा स्वप्ने मानसिकविषयभोगः जाग्रद्विलक्षणः तद्वत् (भोगो भवति, कुतः ?) उपपत्तेः = 'मनसैतान्' इति श्रुतेरेवमेवोपपत्तेः ।

## सू०—भावे जाग्रद्वत् ॥ १४ ॥

पद०— भावे, जाग्रद्वत् ।

पदा०- भावे = सेन्द्रियशरीरभावे, जाग्रद्वत् = यथा जाग्रद्भोगः स्वप्नभोग विलक्षणो भवति, तद्वत् भवति ।

अधिकरणसार

व्यवस्थितावैच्छिको वा भावाभावौ तनोर्मतः ।
विरुद्धौ तेन पुंभेदादुभौ स्यातां व्यवस्थितौ ॥ १ ॥
एकस्मिन्नपि पुंस्येतावैच्छिकौ कालभेदतः ।
अविरोधात्स्वप्नजाग्रद्भोगवद्युज्यते द्विधा ॥ २ ॥

## ६- प्रदीपाधिकरणम् सू० १५-१६

## सू०- प्रदीपवदावेशस्तथा हि दर्शयति ॥१५॥

पद०— प्रदीपवत्, आवेशः, तथा, हि, दर्शयति ।

पदा०- आवेशः = विदुषा सृज्यमानेषु अनेकशरीरेषु विदुषः अभिव्यक्तिः [विद्यासामर्थ्यात् उपपद्यते । तत्र दृष्टान्तः] प्रदीपवत् = यथा एकः प्रदीपः अनेकवर्तिषु प्रविशति । हि = यतः, तथा = तेन प्रकारेण' दर्शयति = 'स एकधा भवति', (छा० ७/२६/२) इत्यादिश्रुतिर्दर्शयति ।

सू०-स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि॥१६॥

पद०- स्वाप्ययसम्पत्त्योः, अन्यतरापेक्षम्, आविष्कृतं, हि ।

पदा०-स्वाप्ययसम्पत्त्योः = सुषुप्तिमुक्त्योः, अन्यतरापेक्षम् = एकतरापेक्षम् [इदं विशेषज्ञानाभावश्रवणम्] हि = यतः, आविष्कृतम् = स्वीकृतम्, सुषुप्तिप्रकरणापेक्षया ततोऽन्यत्' इत्यादि श्रुतम्, परममुक्तिप्रकरणापेक्षया 'तत् केन' (बृह० ४/५/१५) इत्यादि, तस्माद् सगुणविदः शरीराङ्गीकारे न बाधकम् इति ।

अधिकरणसार

निरात्मानोऽनेकदेहाः सात्मका वा निरात्मकाः ।
अभेदादात्ममनसोरेकस्मिन्नेव वर्तनात् ॥ १ ॥

एकस्मान्मनसोऽन्यानि मनांसि स्युः प्रदीपवत् ।
आत्मभिस्तदवच्छिन्नैः सात्मकाः स्युस्त्रिधेत्यतः ॥ २ ॥

## ७-जगद्व्यापाराधिकरणम् सू० १७-२२

सूत्र- जगद्व्यापारवर्जं प्रकरणादसंनिहित—
त्वाच्च ॥ १७ ॥

पद०- जगद् व्यापारवर्जम्, प्रकरणात्, असन्निहितत्वात्, च ।

पदा०- जगद् व्यापारवर्जम् = जगदुत्पत्त्यादिव्यापाररहितम् [ऐश्वर्यम्

विदुषः, कुतः ? ]प्रकरणात् = सृष्टिप्रकरणे ईशस्यैव प्रकृतत्वात्, असन्निहितत्वात् = जीवस्य तत्र सन्निहितत्वाभावाच्च।

**सू०- प्रत्यक्षोपदेशादिति चेन्नाधिकारिमण्डलस्थोक्तेः ॥ १८ ॥**

पद०- प्रत्यक्षोपदेशात्, इति, चेत्, न, आधिकारिकमण्डलस्थोक्तेः।

पदा०- प्रत्यक्षोपदेशात् = 'आप्नोति स्वाराज्यम् (तै० १/६/२) इति प्रत्यक्षश्रुत्या विदुषि निरङ्कुशैश्वर्यस्योपदेशात् विदुषि निरङ्कुशमेवैश्वर्यम्, इति चेन्न = इत्येवं यदि कश्चनाशङ्केत तदा तन्न युक्तियुक्तम कुतः ? आधिकारिकमण्डलस्थोक्तेः = आधिकारिकस्य सूर्यमण्डलस्थस्य परमात्मन उत्तरवाक्ये 'आप्नोति मनसस्पतिम्' इत्यत्र प्राप्यत्वेनोक्तेः [विदुषः सातिशयमेवैश्वर्यमिति गम्यते] ।

**सू०-विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥**

पद०- विकारावर्ति, च, तथा, हि, स्थितिम्, आह ।

पदा०- विकारावर्ति च = निर्गुणस्वरूपम् च [सगुणे ब्रह्मणि अस्ति] हि = यतः, तथा = तेन प्रकारेण, स्थितिम् = ब्रह्मणि सगुणत्वनिर्गुणत्वयोः वृत्तिम्, आह = 'तावानस्य महिमा' (छा०

३/१९/६) इत्यादिश्रुतिः कथयति। अयमत्र भावः—यथा सगुणे स्थितम् निर्गुणस्वरूपमुपासको न प्राप्नोति, तज्ज्ञानाभावात्, तथा तद्गतं जगदुत्पत्त्यादिकमैश्वर्यं न प्राप्नोति, तदुपास्त्यभावात्, उपास्त्यभावश्च श्रुत्यभावादिति ।

सू०— दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

पद०- दर्शयतः, च, एवम्, प्रत्यक्षानुमाने ।

पदा०- च = अपि च, एवम् = ब्रह्मणो निर्गुणत्वं, प्रत्यक्षानुमाने = श्रुतिस्मृती, दर्शयतः = कथयतः, 'न तत्र सूर्यो भाति' (कठ० ५/१५) इति श्रुतिः, 'न तद् भासयते' इति च स्मृतिः ।

सू०—भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

पद०—भोगमात्रसाम्यलिङ्गात्, च ।

पदा०—च = अपि च, भोगमात्रसाम्यलिङ्गात् = भोगमात्रेण—सम्भोगमात्रेण, साम्यम्—समानत्वं श्रुतम्, न जगद्व्यापारेण, 'आपो वै खलु मीयन्ते' (बृह० १/५/२२) इत्यादौ, तस्मात् साम्यलिङ्गात् [विदुषः सातिशयमैश्वर्यं गम्यते] ।

सू०- अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

पद०— अनावृत्तिः, शब्दात्, अनावृत्तिः, शब्दात् ।

पदा०- अनावृत्तिः = अर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तानामनावर्तनम् [भवति, कुतः ? ]शब्दात् = 'न च पुनरावर्तते' इत्यादिश्रुतेः । [सूत्रावर्तनम् शास्त्रपरिसमाप्तिद्योतनार्थम्] ।

अधिकरणसार

जगत्स्रष्टृत्वमस्त्येषां योगिनामथ नास्ति वा ।
अस्ति स्वाराज्यमाप्नोतीत्युक्तैश्वर्यानवग्रहात् ॥ १ ॥

सृष्टावप्रकृतत्वेन स्रष्टृता नास्ति योगिनाम् ।
स्वाराज्यमीशो भोगाय ददे मुक्तिं च विद्यया ॥ २ ॥

॥ इति चतुर्थोऽध्यायस्य चतुर्थः पादः समाप्तः ॥

"समाप्तश्चायं ग्रन्थः"

# उद्‌बोधन

- साधु की सम्पूर्ण परिस्थितियाँ उसकी साधना तप है।
- मन की मान्यता ही बन्धन और मोक्ष ।
- इन्द्रिय भोग न चाहें तो मन कहाँ और कैसे होगा।
- संसार सत्य है सत्योक्ति क्यों ? लेकिन क्या शरीर सत्य है ?
- ईश्वर हृदय में है मन को क्यों बाहर जाने दो?
- मन स्वयं एक नेत्र है जो विषय न देखकर शिव दर्शन करने लगता है।
- सत्य की साधना व सिद्धि दोनों सुखद ही हैं।
- सत्य के साथ मनोरञ्जन अपित है।

भागवत प्रेस, सूर्य भवन नया राजेन्द्रनगर, उरई( उ० प्र०)
फोन- ५१८२७
पि०- २८५००१